॥ श्रीरस्तु ॥

॥ श्री कृष्णाय नमः ॥

# ॥ श्री कृष्णविलासकाव्यम् ॥

## ॥ विलासिन्या समेतम् ॥

॥ प्रथमः सर्गः ॥

अस्ति श्रियस्सद्म सुमेरुनामा
समस्तकल्याणनिधिर्गिरीन्द्रः ।
तिष्ठन्निदं विश्वमनुप्रविश्य
स्वेनात्मना विष्णुरिवोर्जितेन ॥ १ ॥

गुरुणा भूसुरेन्द्रेण कल्पित क्षेत्रमुत्तमम् ।
अध्यासीन नमस्कुर्वे सर्वेश चन्द्रशेखरम् ॥

श्रीनारायणगुरुवरकरुणापात्रेण पाणिवादेन ।
श्रीकृष्णविलासस्य क्रियते टीका विलासिनी नाम ॥

सुकुमारकवेर्वाचा विलासः कृष्णगोचरः ।
सुकुमारपदार्थश्रीर्दशेमुषीं मे विनोदयेत् ॥

अथ कविः आदौ तावत् अखिलभुवनाधिष्ठानभूतमद्वीश्वर वस्तुले-नाभ्युपगच्छन् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुख'मिति वच-नात् वस्तु निर्दिशति— अस्तीति ॥ अस्तीत्यादिना प्रारभे तावत् अस्ति पदग्रहण मङ्गळार्थम् । नित्यस्य सत्पदवाच्यस्य ब्रह्मणस्सद्भावात् । अनन्तर श्री-पदञ्च वाचा प्रपञ्चसिद्ध्यर्थम् । प्रपञ्चहेतुभूतायाः भगवत्या मायायाः स्मरणमभ-

येन तदनुग्रहलाभात्। श्रिय शोभाया सद्म निवासस्थानं सुमेरुनामा मेरु रिति प्रसिद्धः समस्तानां कल्याणानां कल्पवृक्षकामधेनुप्रमुखमङ्गलपदार्थानां निधिः निदानं अथवा— कल्याणशब्दवाच्यानां सुवर्णानां निदानं गिरीन्द्रः पर्वतश्रेष्ठः अस्ति आमानं बिभर्ति । विष्णुः विश्वव्यापी हरिः येन आर्मीयेन ऊर्जितेन बलवता आत्मना शरीरेण उद्देश्यमानं विश्वं भुवनं अनुप्रविश्य लक्षणयाऽधिष्ठाय तिष्ठन्निव प्रकाशं वर्तमान इव। श्रियस्सद्मत्वं अत्र लक्ष्मीनिवासत्वं प्रतिभातीति उत्प्रेक्षेयम्। विश्वव्यापित्वलक्षणमहिम्ना विष्णोः अप्रत्यक्षत्वेऽपि प्रत्यक्षतया पर्वतरूपेणावस्थानस्य सम्भावनात्। 'सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मने'ति लक्षणात् स्वरूपोत्प्रेक्षा। अथवा उपमालङ्कारएव। तथाहि- इदं विश्वमनुप्रविश्येति ब्रह्माण्डकटाहान्तर्भूतं वैकुण्ठलोकं सकलेनात्मनाऽधितिष्ठन् विष्णुरिवेत्युपमानस्य उपमावाचकस्य च समस्तानां नरतिर्यगात्मकप्रपञ्चानां कल्याणनिधिः शुभावहनिधानमिति श्रियः लक्ष्म्यास्सद्मेति च श्लेषवशात् साधारणधर्मस्य च चतुर्णां उपमानोपमावाचकसाधारणधर्मोपमेयानां उपादानात् पूर्णोपमेयमित्यपि व्याख्येयम्। 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयो'रिति लक्षणात्॥ ॥१॥

मिथस्तिरोभावविलोकनाभ्यां
संक्रीडमानाविव बालकौ द्वौ ।
पार्श्वेषु यस्याशु परिभ्रमन्तौ
चन्द्रांशुमन्तौ नयतो दिनानि ॥ २ ॥

मिथ इति ॥ चन्द्रांशुमन्तौ चन्द्रसूर्यौ यस्य सुमेरोः पार्श्वेषु पर्यन्तेषु आशु शीघ्रं परिभ्रमन्तौ परितः सञ्चरन्तौ। दिनानीति रात्रीणामप्युपलक्षणम्। रात्रिदिवसानीत्यर्थः। नयतः गमयतः। अत्र उपमामाह— मिथोऽन्योन्यतिरोभावोऽन्तर्धानं विलोकनं अन्विष्य दर्शनं ताभ्यां साधनाभ्यां संक्रीडमानौ सम्यग्विहरन्तौ 'क्रीडोऽनुसम्परिभ्यश्चे'त्यात्मनेपदम्। शानच्। द्वौ बालकाविव भान्तावितीति। अत्रापि उपमादीनां चतुर्णां उपादानात् पूर्णोपमैव॥२॥

उच्चैश्शिखः काञ्चनगौरवर्णः
तमो निगृह्णन्महसा निजेन ।
दीपस्त्रयाणामिव विष्टपानां
यो भाति पर्यन्तचरत्पतङ्गः ॥ ३ ॥

उच्चैरिति ॥ उच्चैः उन्नतानि शिखाः शिखराणि यस्य। दीपपक्षे उन्नता ज्वाला यस्येति। काञ्चनेन सुवर्णेन हेतुना गौरः पीतः वर्णो यस्य। 'पीतो गौरो हरिद्राभः' इत्यमरः। अन्यत्र काञ्चनमिव गौर इति। निजेन आत्मीयेन महसा तेजसा महत्त्वेनेति यावत्। तमः अज्ञानं दुरितमिति यावत्। निगृह्णन् स्वप्रदेशान्तर्भूतं स्वर्गं अधिरोपयन् जनानां दुष्कृतं निराकुर्वन्नित्यर्थः। अन्यत्र अन्धकारं प्रशमयन्निति। पर्यन्ते परितः सञ्चरन् पतङ्गः सूर्यो यस्य। अन्यत्र पतङ्गाः शलभाः। 'पतङ्गौ पक्षिसूर्यौ' इत्यमरः। यः सुमेरुः त्रयाणां विष्टपानां भुवनानां दीप इव भाति दीप्यते। उपमालङ्कार एव ॥ ॥ ३ ॥

यस्याः पतित्वे विहिताभिलाषः
करोति तीव्राणि तपांसि लोकः ।
बिभर्ति रत्नाकरमेखलां तां
अङ्केन पुत्रीमिव यो धरित्रीम् ॥ ४ ॥

यस्या इति ॥ लोको जनः। 'लोकस्तु भुवने जने' इत्यमरः। यस्या धरित्र्याः पतित्वे भर्तृत्वे विषये विहिताभिलाषः कृताभिलाषः सन् तीव्राणि उग्राणि तपांसि करोति अहं भूपतिर्भूयासमिति तपस्यतीत्यर्थः। तां तादृशीं रत्नाकराः समुद्रा एव मेखला काञ्ची यस्याः तथाभूतां धरित्रीं भुवं पुत्रीं आत्मजामिव अङ्केन सानुप्रदेशेन। अन्यत्र ऊरुप्रदेशेन। यो मेरुः बिभर्ति वहति। यदाश्रया धरित्रीति भावः ॥ ॥ ४ ॥

महान्ति दानानि मखानुदग्रान्
पराञ्चि पानाशनयोस्तपांसि ।
शरीरिणश्शान्तमले मनोभिः
कुर्वन्ति यच्छृङ्गनिवासकामाः ॥ ५ ॥

महान्तीति ॥ यच्छृङ्गेषु यस्य शिखरेषु स्वर्गप्रदेशेष्वित्यर्थः । निवासे कामो येषां तथा सन्तः शरीरिणः देहिनः शान्तमलैः विगतदुरितैः मनोभिः उपलक्षिताः महान्ति प्रभूतानि दानानि गोभूहिरण्यादीनि उदग्रान् उत्कृष्टान् मखान् यज्ञान् पानस्य अशनस्य च पराञ्चि पराङ्मुखानि भोग्यवर्जितानीत्यर्थः । तपांसि च कुर्वन्ति अनुतिष्ठन्ति ॥ ॥ ५ ॥

सुरा युगान्तेषु सह प्रियाभिः
निषेदिवांसो यदधित्यकासु ।
उदन्वतामैक्यमुपागतानां
पश्यन्ति कल्लोलशतप्रचारान् ॥ ६ ॥

सुरा इति ॥ सुराः देवाः युगान्तेषु प्रळयसमयेषु प्रियाभिस्सह यस्य मेरोः अधित्यकासु ऊर्ध्वप्रदेशेषु 'ऊर्ध्वमधित्यका' इत्यमरः । निषेदिवांसः निषण्णास्सन्तः ऐक्यं एकीभावं उपागतानां प्राप्तानां उदन्वतां उदधीनां कल्लोलशतस्य तरङ्गसमूहस्य प्रचारान् सञ्चारान् पश्यन्ति प्रळयकालेऽप्यपरिक्षयोऽयमिति भावः ॥ ॥ ६ ॥

पुष्पाणि शय्यास्सुरपादपानां
क्रीडागृहाः काञ्चनगह्वराणि ।
भवन्ति च स्वर्गविलासिनीनां
रत्नाङ्कुरा यत्र रतिप्रदीपाः ॥ ७ ॥

पुष्पाणीनि ॥ स्वर्गविलासिनीना अप्सरसा सुरपादपाना पारिजाता दीना पुष्पाणि शय्या तल्पानि भवन्ति । काञ्चनमयानि गह्वराणि गुहा तल्पानि क्रीडार्थं गृहा क्रीडागृहा । रत्नाकुरा रत्नदमयश्च रत्यर्था प्रदीपा दीपिका भवन्तीति वाक्यत्रयेऽपि । रतिशब्दप्रयोगात् भर्तृसहितानामिति गम्यते ॥ ॥ ७ ॥

स्वर्गौकसस्स्वर्णमहीषु पीताः
श्वेतत्विषो रूप्यमयीषु भूषु ।
नीलाश्च नीलोत्पलमेदिनीषु
ज्ञातुं मिथो यत्र न शक्नुवन्ति ॥८॥

स्वर्गौकस इति ॥ यत्र मेरौ स्वर्गौकस देवा स्वर्णमहीषु कनकभूमिषु पीता स्वर्णप्रभासक्रान्तशरीरत्वात् सर्वेऽपि पीतवर्णास्सन्त मिथ अन्योन्य ज्ञातु न शक्नुवन्ति न शक्ता भवन्ति । सर्वेषा सावर्ण्यात् परस्परदुर्ज्ञेया इत्यर्थ । एव उत्तरवाक्यद्वयमपि । रूप्यमयीषु रजतात्मिकासु भूषु श्वेतत्विष शुभ्रवर्णास्सन्त, नीलोत्पलमेदिनीषु इन्द्रनीलस्थलीषु नीला कृष्णवर्णास्सन्तश्चेति ॥ ॥ ८ ॥

दरीगृहोत्सङ्गगतेरनूरोः
कशाभिघातध्वनिभिस्सकम्पाः ।
सद्यः प्रियानुज्झितमानदोषाः
सुराङ्गना यत्र परिष्वजन्ते ॥ ९ ॥

दरीति ॥ यत्र मेरौ सुराङ्गना देवस्त्रिय दरी गुहा सैव गृह तस्य उत्सङ्गे अन्तर्भागे गति गमन यस्य तस्य अनूरो अरुणस्य कशया प्रतोदेन य अभिघात प्रहार तस्य ध्वनिभि शब्दै हेतुभि सकम्पा कम्पसहिता त्रस्ता वेपथुयुक्ता इत्यर्थ । सद्य तत्क्षणमेव उज्झित त्यक्त मान प्र

दोषो याभि तथा सत्य प्रियान् वल्लभान् सापराधानपीत्यर्थ । परिष्वजन्ते परिरभन्ते । अनेन अस्य गिरे अयुक्ततत्त्व दर्शितम् ॥ ॥ ९ ॥

नेतुं त्रपानम्रमुखीरनीशाः
स्फुटानि यत्स्वर्णगुहान्तराणि ।
सिद्धाः प्रयत्नेन विना नवोढाः
नयन्ति नीलोपलगह्वराणि ॥ १० ॥

नेतुमिति ॥ त्रपया लज्जया नम्रमुखी अवनतमुखी नवोढा नूतनपरिणाता स्त्रीरिति शेष । स्फुटानि प्रकाशानि यस्य स्वर्णमयानि गुहान्तराणि गुहान्तर्भागान् नेतु प्रापयितु अनीशा सिद्धा नीलोपलगह्वराणि नीलरत्नकन्दराणि । नीलमणीना अन्धकारसादृश्यात् अप्रकाशानीति भाव । प्रयत्नेन विना अप्रयासमेव नयन्ति प्रापयन्ति । वलदनेनानुगृह्यन्ते सिद्धा इति भाव ॥ ॥ १० ॥

यत्रोद्यतानां कुसुमापचाये
कान्तासु कल्पद्रुमवाटिकासु ।
विभान्ति सुत्रामविलासिनीनां
पदानि लाक्षारसपाटलानि ॥ ११ ॥

यत्रेति ॥ यत्र मेरौ कान्तासु मनोहरासु कल्पद्रुमाणा वाटिकासु उद्यानेषु कुसुमापचाये पुष्पोच्चये 'हस्तादाने चेरस्तेय' इति घ्यन्तात् अत्र स्थितानामेव हस्तेन पुष्पापचयो युज्यते । अत एव तस्मिन् तासा पदचिह्नसम्भवइत्यभन्तव्यम् । उद्यताना उद्युक्ताना सुत्रामविलासिनीना इन्द्रपुरस्त्रीणा लाक्षारसेन अलक्तकरसेन पाटलानि अरुणानि पदानि पदन्या सस्थलानि विभान्ति विशेषेण शोभन्ते ॥ ॥ ११ ॥

पयोदमार्गव्यतिलङ्घिनीषु
हंसाः शिरःपुष्करिणीषु यस्य ।
वर्षागमेऽप्यश्रुतमेघनादाः
न कुर्वते मानसदीर्घयात्राम् ॥१२॥

पयोदेति ॥ पयोदमार्गं मेघमार्गं व्यतिलङ्घितु अतिक्रामितु शील आसामिति तादृशीषु यस्य मेरो शिरःपुष्करिणीषु अग्रभागसरसीषु विद्यमाना हंसा वर्षागमे वर्षारम्भे अश्रुत अनाकर्णित मेघनाद स्तनित ये तथा सन्त । अनेन अग्रभागात् अत्यन्ताधस्थानत्व मेघमार्गस्येत्युक्तम् । मानस सर प्रति दीर्घयात्रा दीर्घाध्वगमन न कुर्वते । स्तनितश्रवणमेव तेषा गमनहेतु । तदभावात् गमनाभाव इति भाव ॥ ॥ १२ ॥

छन्नेषु यस्मिन् कनकोज्ज्वलाभि-
रामूलचूडं नवमञ्जरीभिः ।
गन्धेन विज्ञाय पतन्ति भृङ्गाः
भृङ्गान्तरारग्वधपादपेषु ॥ १३ ॥

छन्नेष्विति ॥ कनकोज्ज्वलाभि सुवर्णवर्णाभि नवमञ्जरीभि नूतन पुष्पस्तबके आमूलचूड मूलत आरभ्य चूडापर्यन्त छन्नेषु आवृतेषु यस्मिन् गिरौ विद्यमानेषु भृङ्गान्तरेषु शिखरावकाशेषु ये आरग्वधपादपा शम्याक वृक्षा 'आरग्वधे राजवृक्षशम्याकचतुरङ्गुला' इत्यमर । तेषु विषयेषु भृङ्गा गन्धेन सौरभ्येण चिह्नेन विज्ञाय विदित्वा पतन्ति अभिगच्छन्ति । सुवर्णसवर्णत्वात् सुवर्णमये तत्र चक्षुरिन्द्रियेण अवगन्तुमशक्यत्वादिति भाव ॥

मन्दाकिनी यच्छिखरे वहन्ती
कुल्यापथाभ्यन्तरसंप्रविष्टा ।

वालेव तद्रक्षणसंप्रवृत्ता
दिनेदिने सिञ्चति पुष्पवाटीम् ॥ १४ ॥

मन्दाकिनीति ॥ यच्छिखरे यस्य शृङ्गे वहन्ती प्रवाहेण गच्छन्ती कुल्यापथेन कृत्रिमसरिन्मार्गेण 'कुल्याऽल्पा कृत्रिमासरि'दित्यमरः । अभ्यन्तरमन्तर्भाग सम्यक् प्रविष्टा सती मन्दाकिनी वियद्गङ्गा तद्रक्षणे तस्याः पुष्पवाट्या पालने विषये सप्रवृत्ता प्रवर्तमाना वालेव बालकन्यकाना एकपुष्पवाटीसेचनाधिकार' 'स्रस्तासावतिमात्रलोहिततला'वित्यादिप्रयोगात् । दिनेदिने प्रतिदिन पुष्पवाटीं कुसुमोद्यान सिञ्चति जलेनाभ्युक्षति ॥ ॥ १४ ॥

श्रियाऽभिरामश्शरणं सुराणा-
मलङ्घनीयो महता महिम्ना ।
विराजमानो वनमालया च
यश्शार्ङ्गधन्वानमनुप्रयाति ॥ १५ ॥

श्रियेति ॥ श्रिया शोभया लक्ष्म्या च अभिरामः मनोहर । सुराणा शरण अवस्थान रक्षिता च । 'शरण गृहरक्षित्रो'रित्यमर । महता उत्कृष्टेन महिम्ना पृथुत्वेन माहात्म्येन अलङ्घनीय' अनतिक्रमणीय. अनभिभवनीयश्च वनमालया वनसमूहेन वनस्रजा च विराजमानः शोभमान' विना पक्षीन्द्रेण राजमानश्च यः सुमेरु' शार्ङ्गधन्वान विष्णु अनुप्रयाति अनुगच्छति । तत्सदृशो भवतीत्यर्थ' । श्लेषालङ्कारः ॥ ॥ १५ ॥

पुरा पुराणां त्रितयं दिधक्षो-
रुमापतेः कार्मुकतां प्रपन्नः ।
मध्येन वज्राङ्कुशमत्स्यचिह्नं
योऽद्यापि तन्मुष्टिपदं दधाति ॥ १६ ॥

पुरेति ॥ पुरा पूर्वं पुराणा त्रिपुरदानवाना त्रितय दिधक्षो दग्धुमिच्छो उमापते ईश्वरस्य कार्मुकता चापत्व प्रपन्न प्राप्त मेरु मध्येन भागेन अद्यापि अधुनाऽपि वज्राङ्कुशम स्वरूप चिह्न लाञ्छन यस्य तादृश तस्य उमापते मुष्टिपद मुष्टिग्रहणस्थान बिभर्ति वहति ॥ ॥ १६ ॥

**शृङ्गाग्रभाजां सुरसुन्दरीणां**
**मुखानि पश्यन्नमलानि चन्द्रः ।**
**निगूहितुं नूनमुरःकळङ्कं**
**ह्रियेव यत्सानुपथेन याति ॥ १७ ॥**

शृङ्गेति ॥ शृङ्गस्य शिखरस्य अग्र भजन्तीति तादृशीना सुरसुन्दरीणा अप्सरसा अमलानि निर्दोषाणि मुखानि पश्यन् चन्द्र ह्रिया लज्जयेति हेतूत्प्रेक्षा । उर कळङ्क मध्यचिह्न निगूहितु छादयितु नूनमिति फलोत्प्रेक्षा । मा तानदिमा माद्राक्षुरिति तद्दर्शन परिहर्तु नूनमित्यर्थ । यस्य मेरो सानुपथेन कटकाध्वना याति गच्छति फलोत्प्रेक्षा चेयम् । अहेतौ हेतुत्वेन कल्पन हेतूत्प्रेक्षा । अफले फलत्वेन कल्पन फलोत्प्रेक्षा । ह्रियेवेति हेतूत्प्रेक्षा । निगूहितु नून स्वर्गातिशायिन अद्रे स्वभावत सानुपथेन सञ्चारस्य कळङ्कनिगूहनफलकतया नूनमिति फलोत्प्रेक्षा । तयोर्द्वयोरपि सङ्कर ॥

**मनोभिरामे शिखरे तदीये**
**सहोपविष्टं सुरसिद्धसङ्घैः ।**
**अवोचदागत्य कृतप्रणामा**
**कदाचिदुर्वी कमलाधिवासम् ॥ १८ ॥**

अथ गिरिवर्णनमुपसहृत्य कथापथमवतारयति— मनोभिराम इति ॥ मनोभिरामे मनोहरे तस्य मेरो सम्बन्धिनि शिखरे सत्यलोकाख्यशृङ्गे सुरसिद्धाना सङ्घे समूहे सहोपविष्ट कमलाधिवास ब्रह्माण उर्वी भूमिदेवी

कदाचित् आगत्य उपगम्य कृतप्रणामा कृतनमस्कारा सती अवोचत् उक्तवती ॥　　॥ १८ ॥

पुमानिवाहं भवतः पुरस्तात्
　ब्रवीमि किञ्चित् प्रतिपद्य धैर्यम् ।
पीडा मदीया परमत्र हेतु-
　र्निर्लज्जता नन्वखिलोपहास्या ॥ १९ ॥

तमेवोक्तिप्रकारमाह— पुमानिति ॥ अहं भवतः पुरस्तात् अग्रभागे पुमानिव पुरुष इव धैर्यं धीरतां प्रतिपद्य अवलम्ब्य किंचित् ब्रवीमि किमपि कार्यं अवबोधयामि । अत्र एव कथने मदीया मत्सम्बन्धिनी पीडा शोकः परं केवलं हेतुः कारणम् । निर्लज्जता लज्जारहितत्वं अखिलानां जनानां उपहास्या परिहसितुं योग्या नन्वित्यवधारणे । योग्यैवेत्यर्थः ।तथाऽपि पीडावशात् ब्रवीमीति भावः ॥　　॥ १९ ॥

सृष्टास्त्वया दत्तवराश्च दैत्या
　भारेण मां संप्रति पीडयन्ति ।
बले प्रमाणे च भवन्ति येषां
　नवोपमानं कुलभूभृतोऽपि ॥ २० ॥

का तव पीडेति चेत् अत्राह— सृष्टा इति ॥ त्वया सृष्टा निर्मिता दत्तवराश्च प्रतिपादितानश्वरत्वादिवराश्च दैत्या दानवाः संप्रति भारेण हेतुना मां पीडयन्ति व्यथयन्ति ॥ कस्मादसौ भार इति चेदुच्यते । येषां दैत्यानां बले सारवत्त्वे प्रमाणे पृथुत्वोन्नत्यादिसंस्थाने विषये कुलभूभृतोऽपि कुलपर्वता अपि नैवोपमानं सादृश्यं न भवन्ति । उपमानशब्दस्य उपमितिक्रियापरत्वात् एकवचनं क्रियाया एकत्वात् ॥　　॥२०॥

स्वविक्रमोन्मूलितराजकानां
जयैषिणामद्य परस्परेण ।
तेषां रणक्षोणिषु सिंहनादैः
निर्घातघोरैर्गिरयः स्फुटन्ति ॥ २१ ॥

स्वविक्रमेति ॥ स्वविक्रमेण आत्मपराक्रमेण उन्मूलितानि राजकानि राजसमूहः यैः तादृशानां अद्य अस्मिन् काले परस्परेण अन्योन्यं जयैषिणां जेतुमिच्छतां तेषां दैत्यानां रणक्षोणिषु युद्धभूमिषु निर्घातघोरैः स्तनितभयङ्करैः सिंहनादैः गिरयः पर्वताः स्फुटन्ति विशीर्यन्ति । तिलशो निर्दीर्णा भवन्तीत्यर्थः ॥ ॥ २१ ॥

मुहुर्बलादुन्नमयत्यहीन्द्रे
मद्भारभुग्नं फणचक्रवाळम् ।
मम प्रकम्पाश्चलिताब्धिशैला
दिग्दन्तिनो हन्त कदर्थयन्ति ॥ २२ ॥

मुहुरिति ॥ अहीन्द्रे शेषे मद्भारेण भुग्नं वक्रीभूतं फणानां चक्रवाळं फणसमूहं मुहुः पुनःपुनः बलात् प्रयत्नेन उन्नमयति उत्तानीकुर्वति चलिताः कम्पिताः अब्धयः समुद्राः शैलाः पर्वताश्च यैः तादृशाः मम प्रकम्पाः चलनानि दिग्दन्तिनः दिग्गजान् कदर्थयन्ति पीडयन्ति । हन्तेति खेदे ॥ ॥ २२ ॥

आशामुखेषु भ्रमतामजस्रं
तेषां चमूभिः परिसर्पिणीभिः ।
तिरोहितां भानुमतो मयूखाः
न क्वापि मां संप्रति संस्पृशन्ति ॥ २३ ॥

अशेति ॥ भानुमन सूर्यस्य मयूखा रश्मय अजस्र अनिश आशा मुखेषु दिङ्मुखेषु भ्रमन्त सञ्चरन्त तथा दैत्याना परिमार्पणाभि व्यापन शीलाभि चमूभि तिरोहिता आच्छादिता सा सम्प्रति इदानीं क्वापि क्वचिदपि प्रदेशे न सञ्चरन्ति । सूर्यकिरणस्पर्शाभावादशुचिरस्मीति भाव ॥

सन्नाऽस्मि दैतेयभरेण साऽहं
फणीश्वरस्सीदति मद्भरेण ।
तद्भारशीर्यन्निजकर्परस्य
धिक्तामवस्थां कमठेश्वरस्य ॥ २४ ॥

सन्नेति ॥ सा तादृगवस्था अह दैतेयाना भरेण हेतुना सन्नाऽस्मि क्लान्ता भवामि । मद्भरेण मत्सम्बन्धिना भारेण फणीश्वर अनन्त सीदति ताम्यति । तस्य फणीश्वरस्य भारेण शीर्यन् शकलीभवन् निज आत्मन कर्पर पृष्ठास्थि यस्य तस्य कमठेश्वरस्य आदिकूर्मस्य ता तादृशीं अवस्था धिक् धिक्करोमि । भारत्रयसमुद्वहनक्लान्ततरस्य अवस्था किमुच्यत इति भाव ॥२४॥

भारावसीदत्फणमण्डलस्य
फणीश्वरस्योपरि दुस्स्थिताऽहम् ।
आसन्नपाताऽस्मि तटीव नद्याः
प्रवाहवेगेन विलुप्तमूला ॥ २५ ॥

भारेति ॥ भारेण अवसीदत् ताम्यत् फणाना मण्डल समूह यस्य तस्य फणीश्वरस्य शेषस्य उपरि दुस्स्थिता दु खेन स्थिता अह नद्या प्रवाहस्य वेगेन हेतुना विलुप्तमूला विशीर्णमूलभागा तटीव तीरमिव आसन्न प्राप्तकाल पात यस्या तादृशी अस्मि भवामि ॥ ॥ २५ ॥

निवेदिता देव मया दशेय-
मनुक्तिदोषो मयि नोपपाद्यः ।
निवेद्यते रक्ष्यजनेन दुःखं
ततः परस्तात् प्रभवः प्रमाणम् ॥ २६ ॥

निवेदितेति ॥ हेदेव मया इय ईदृशी दशा अवस्था निवेदिता नि-
ज्ञापिता । अनुक्तया अकथनेन य दोष स मयि नोपपाद्य उपपादयितु
न शक्य । रक्ष्येण रक्षणीयेन जनेन दु ख आत्मशोक निवेद्यते निज्ञाप्यते ।
तत परस्तात् निवेदनादुपरि प्रभव प्रमाण प्रमातार दु'खापनोदोपायस्य
कर्तार इत्यर्थ ॥ ॥ २६ ॥

इत्युक्तवत्यामुचितं पृथिव्यां
चिन्तावलेन स्तिमितो मुहूर्तम् ।
मुखानि पश्यन्नमृताशनानां
देवः प्रजानांपतिरित्युवाच ॥ २७ ॥

अथ धरित्रीवचनमुपसंहरति— इतीति ॥ इति एवप्रकार उचित
योग्य यथा भवति तथा पृथिव्या उक्तवत्या कथितवत्या सत्या प्रजाना
पति देव ब्रह्मा मुहूर्त अल्पकाल चिन्तावलेन किं कर्तव्यताविचारशक्त्या
स्तिमित निश्चलस्सन् अमृताशनाना देवाना मुखानि पश्यन् किममी व्यव
स्यन्तीत्यभिप्रायेण अवलोकयन् इति वक्ष्यमाणप्रकारेण उवाच उक्तवान् ॥

नासत्यमेतद्यदवोचदुर्वी
स्वकर्मणस्साधु फलं मयाऽऽप्तम् ।

मद्वर्धिता मामवमत्य दैत्या
बलादुपघ्नन्ति जगन्ति यत्ते ॥ २८ ॥

उक्तिप्रकारमाह— नासत्यमिति ॥ उर्वी भूमिदेवी यत् अवोचत् यद् उक्तवती एतद्वचन असत्य न भवति सत्यमेवेत्यर्थः । स्वकर्मणः आत्मना कृतस्य फल साधु मया आप्त अनुभूतम् । तत् किमित्यत आह— यत् यस्मात् कारणात् मद्वर्द्धिता मया वरप्रदानेन उपबृंहिता दैत्याः मा अवमत्य अवज्ञाय बलात्कारेण जगन्ति लोकान् उपघ्नन्ति नाशयन्ति । अतः मम अविमृश्यकारिताया फलमेवेति भाव ॥ ॥ २८ ॥

अतीतकार्यानुशयेन किं स्या-
दशेषविद्वज्जनगर्हितेन ।
सुरास्समुन्मूलनमाशु तेषां
कर्तुं यतध्वं जगतां हिताय ॥ २९ ॥

अतीतेति ॥ अशेषैः समस्तैः विद्वज्जनैः विद्वद्वर्गैः गर्हितेन निन्दितेन अतीतस्य अनुष्ठितस्य कार्यस्य अनुशयेन पश्चात्तापेन किं स्यात् किं फल भवेत् न किमपीत्यर्थः । हेसुराः यूय जगता लोकाना हिताय हित कर्तुं तेषा दैत्याना समुन्मूलन मूलच्छेद आशु कर्तुं यतध्व प्रयत्न कुरुत । भवद्भिः प्रयत्ने कृते तत्सेत्स्यत्येवेत्यभिप्रायः ॥ ॥ २९ ॥

सद्यस्समुत्तिष्ठत चिन्तयाऽलं
चिन्ता हि कार्यप्रतिबन्धहेतुः ।
यामः पृथिव्यासह तत्र यत्र
नारायणो दानवकालरात्रिः ॥ ३० ॥

सच इति ॥ यूय सच इदानीमेव समुत्तिष्ठन उत्थान कुरुत।चिन्तया चिन्तया प्रयोजन नास्तीत्यर्थ ।चिन्ता कार्यस्य कर्तव्यस्य वस्तुन प्रति ास्य प्रयूहस्य हेतु कारणम् । हि यस्मात् दानवाना दैत्याना काळ । मरणदिनपूर्वरात्रि मरणहेतुरित्यर्थ । नारायण यत्र यस्मिन् प्रदेशे नीति शेष । तत्र तस्मिन् प्रदेशे पृथिव्या भूम्या सह याम गच्छाम । व्या सह यानतु तस्या एव इदानीं कार्यप्रसिद्ध्यावश्यकत्वात् ॥ ३० ॥

अस्त्वेवमित्यादरपूर्वमेव
सस्वीकृतोक्तिस्सुरसिद्धसङ्घैः ।
सरोजजन्मा सह तैः प्रतस्थे
विहायसा विश्वपतेस्सकाशम् ॥ ३१ ॥

अस्त्विति ॥ एवमस्तु यथा भवतोक्त तथा भवतु इत्यादरपूर्वमेव रस्कृतादरमेव सुरसिद्धाना सङ्घै स्वीकृता अङ्गीकृता उक्ति वचन यस्य । तादृश सरोजजन्मा ब्रह्मा ते सङ्घैस्सह विहायसा गगनमार्गेण विश्वपते ष्णो सकाश समीप प्रतस्थे प्रस्थितवान् ॥ ॥ ३१ ॥

एलापरिष्वङ्गलसत्तमालं
वेलाधिरूढस्खलदूर्मिमालम् ।
ददर्श धाता मनसोऽनुकूलं
पयःपयोधेरचिरेण कूलम् ॥ ३२ ॥

एलेति ॥ धाता ब्रह्मा अचिरेण क्षणेन एलाना एलालताना परिष्व ङ्गेण आश्लेषेण लसन्त शोभमाना तापिञ्छवृक्षा यत्र । वेलाया तटप्रदेशे अ धिरूढा स्खलन्त्यश्च ऊर्मिमाला तरङ्गपङ्क्तय यत्र । तादृश मनसोऽनुकूल मनोरथस्य सदृशम् । यथा मनसा कल्पित तथैवेत्यर्थ । पय पयोधे क्षीरा धे कूल रोधस्स्थल ददर्श दृष्टवान् ॥ ॥ ३२ ॥

ददर्श च क्षीरमयं समुद्रं
कैलासशृङ्गोन्नतफेनकूटम् ।
पुण्यं पयःकेळिसमुत्सुकानां
श्रियस्सखीनामवगाहनेन ॥ ३३ ॥

ददर्शेति ॥ कैलासशृङ्गाणीव उन्नताः उत्तुङ्गाः फेनकूटाः डिण्डीरपिण्डा यस्मिन् । पयःकेळिः जलक्रीडा । तत्र समुत्सुकानां सश्रद्धानां श्रियः लक्ष्म्याः सखीनां वयस्यानां अवगाहनेन अवमज्जनेन हेतुना पुण्यं सुकृतकारि क्षीरमयं दुग्धस्वरूपं समुद्रं ददर्श च दृष्टवांश्च । स इति कर्ताऽनुपज्यते ॥ ॥ ३३ ॥

आनन्दयामास दिवौकसस्ता-
नाघ्रातशेषो मुनिमण्डलेन ।
प्रकामपुण्यः पवनोपनीतो
वैकुण्ठवक्षस्तुळसीसुगन्धः ॥ ३४ ॥

आनन्देति ॥ मुनिमण्डलेन नारदादिभक्तजनसमूहेन आघ्रातस्य घ्राणेन्द्रियानुभूतस्य शेषः । अनेन अपरिमितत्वं व्यज्यते । प्रकामं अतिशयेन पुण्यः पुण्यहेतुः । पवनेन वायुना उपनीतः समीपं प्रापितः वैकुण्ठस्य विष्णोः वक्षस्तुळस्याः उरःस्थितायास्तुळसीस्रजः सुगन्धः सौरभ्यं तान् तथा तत्रागतान् दिवौकसः देवान् आनन्दयामास आह्लादयाञ्चकार । अहो महाभागधेयाः खल्वमी इति कवेरभिप्रायः ॥ ॥ ३४ ॥

गन्धानुसारेण विसृष्टनेत्रै-
र्हिरण्यगर्भप्रमुखैरमर्त्यैः ।

नवार्ककल्पं ददृशे मुरारे-
र्वक्षस्थलीकौस्तुभरत्नधाम ॥ ३५ ॥

गन्धेति ॥ गन्धानुसारेण सौरभमनुसृत्य निस्पन्दनेत्रैः प्रेरितलोचनैः हिरण्यगर्भप्रमुखैः ब्रह्मादिभिः अमर्त्यैः देवैः नवार्ककल्पं बालसूर्यसदृशं मुरारेः विष्णोः वक्षस्थल्याः यः कौस्तुभरत्नं तस्य धाम ददृशे दृष्टम् ॥ ३५ ॥

अपह्नुताशेषमनोविकारं
दिविस्पृशा तूर्यरवेण मिश्रम् ।
आकर्ण्य वैकुण्ठविलासिनीनां
गीतध्वनिं हर्षमयासिषुस्ते ॥ ३६ ॥

अपह्नुतेति ॥ ते अमर्त्याः अपह्नुतः तिरोहितः अशेषः सर्वः मनोविकारः चित्तविकृतिः येन तादृशं दिविस्पृशा स्वर्गलोकस्पर्शिना तूर्याणां वाद्यविशेषाणां रवेण शब्देन मिश्रं सम्मिलितं वैकुण्ठे विष्णुलोके या विलासिन्यः सुन्दर्यः तासां गीतध्वनिं गानध्वनिं आकर्ण्य श्रुत्वा हर्षं अयासिषुः प्राप्ताः ॥ ३६ ॥

आसक्तिमालक्ष्य विनीतवेषाः
स्वमौलिविन्यस्तकरास्सुरास्ते ।
आलोकयामासुरशेषनाथं
सविग्रहं पुण्यमिव प्रजानाम् ॥ ३७ ॥

आसक्तिमिति ॥ ते सुराः आसक्तिं सामीप्यम् । विष्णोरिति शेषः । आलक्ष्य ज्ञात्वा विनीतवेषाः विनयोचिताकल्पाः स्वमौलिषु निजमस्तकेषु विन्यस्तकराः निक्षिप्तमुकुलितकराः । इदमेव हि विनीतवेषत्वम् । अशेषनाथं भुवनपतिं आलोकयामासुः ददृशुः । प्रजानां जगदभिमतानां सवि

म्रहं सशरीरं पुण्यमिवेति । पुण्यस्य शरीरयोगाभावेऽपि तथात्वेन सम्भावनादत्रोत्प्रेक्षा ॥ ॥ ३७ ॥

प्रवृद्धहेमाभरणप्रकाशं
तमालनीलं जलधौ शयानम् ।
तडिल्लताढ्यं पयसोऽतिपाना-
दनीशमुद्गन्तुमिवाम्बुवाहम् ॥ ३८ ॥

इतोऽष्टभिश्श्लोकैः कलापकन्यायेन विष्णुं वर्णयति— प्रवृद्धेति ॥ प्रवृद्धः प्रकर्षेण उद्रिक्तः हेमाभरणानां स्वर्णालङ्काराणां प्रकाशः यस्मिन् तादृशम् । तमालवत् तापिच्छमिव नीलं श्यामळं जलधौ क्षीराब्धौ शयानम् । अत्रोपमामाह— पयसः जलस्य क्षीरस्य वा अतिपानाद्धेतोः उद्गन्तुं उत्थाय उपरि गन्तुं अनीशं असमर्थं तडिल्लतया विद्युल्लतया आढ्यं श्रेष्ठम् ॥ अयञ्च हेमाभरणप्रकाशस्य प्रतिबिम्बः । अम्बुवाहं मेघमिव । तादृशं तं तुष्टुवुरिति वक्ष्यमाणेनान्वयः ॥ ॥ ३८ ॥

तरङ्गवातेन पयःपयोधे-
रापूर्यमाणं करपाञ्चजन्यम् ।
वामेन तिर्यग्वलता सलीलं
सम्भावयन्तं मुहुरीक्षणेन ॥ ३९ ॥

तरङ्गेति ॥ पयःपयोधेः दुग्धाब्धेः तरङ्गवातेन वीचीसमीरणेन आपूर्यमाणं आध्मायमानं करस्थितं पाञ्चजन्यं तिर्यक् तिरश्चीनं वलता सञ्चरता वामेन ईक्षणेन मुहुः पुनःपुनः सलीलं सविलासं सम्भावयन्तं मानयन्तमित्यर्थः ॥ ॥ ३९ ॥

प्रतिक्षणं प्रेमविशेषजाभि-
स्सम्भावनाभिः कमलासनायाः ।

पुराऽऽत्मना कल्पितमम्बुराशेः
प्रमार्जयन्तं मथनावमानम् ॥ ४० ॥

प्रतिक्षणमिति ॥ प्रतिक्षणं क्षणेक्षणे प्रेमविशेषात् प्रणयातिशयात् जाताभिः कमलासनायाः श्रियः सम्भाननाभिः सम्यगालोकनानुग्रहैः करणभूतैः पूर्वं आत्मना स्वेन कल्पित उपपादित अम्बुराशेः दुग्धाब्धेः मथनमेव अवमानः अवज्ञा त प्रमार्जयन्तं प्रलोपयन्तम् । शमयन्तमित्यर्थः । पितरि कृतः अवमानः पुत्रीसम्माननेन प्रलुप्तः भवेदेवेत्यभिप्रायः ॥ ॥ ४० ॥

पर्यायतः पाणिधृतं सरोजं
विन्यस्यविन्यस्य दृशोः पदव्याम् ।
निद्रां प्रबोधञ्च मुहुर्नयन्तीं
पद्मासनां सस्मितमीक्षमाणम् ॥ ४१ ॥

पर्यायत इति ॥ पाणिधृत करतलस्थित सरोज दृशो.पदव्यां भर्तुर्नेत्रयोः मार्गे पर्यायतः क्रमेण विन्यस्य विन्यस्य पुनःपुनर्निधाय निद्रां मुकुळभाव प्रबोध विकासञ्च मुहु अनेकवार नयन्तीम्।तद्दृशोः चन्द्रसूर्यात्मकत्वात् पद्मस्य उन्मीलनं निमीलनञ्चेति भाव । तादृशीं पद्मासना श्रिय सस्मित यथा तथा ईक्षमाण पश्यन्तम् ॥ ॥ ४१ ॥

स्वच्छस्वदेहप्रतिबिम्बितेन
फणाश्मजालेन फणीश्वरस्य ।
भास्वत्फलस्तोमनिरन्तरस्य
वहन्तमाभां वटपादपस्य ॥ ४२ ॥

स्वच्छेति ॥ स्वच्छे निर्मले स्वदेहे निजशरीरे प्रतिबिम्बितेन फणीश्वरस्य अनन्तस्य फणाश्मजालेन फणारत्नसमूहेन हेतुना भास्वता दीप्य.

मानेन फलस्तोमेन पक्वफलसमूहेन निरन्तरस्य पूर्णस्य वटपादपस्य न्यग्रोधद्रुमस्य आभा वहन् अरुणमणिनिकरप्रतिबिम्बितशरीरतया पाटलफलजालनिरन्तरवटपादपसादृश्य भगवत वर्णितमिति उपमालङ्कारः ॥ ४२ ॥

अजस्रमासीनरथाङ्गशङ्ख-
मतिप्रसन्नं कमलाधिवासम् ।
सन्तापविच्छेदकरं प्रजानां
ह्रदं महीयांसमिवाभिगम्यम् ॥ ४३ ॥

अजस्रमिति ॥ अजस्र अनवरत आसीनौ आसन्नवर्तिनौ रथाङ्गशङ्खौ सुदर्शनपाञ्चजन्यौ । ह्रदपक्षे रथाङ्गाख्यकनाका शङ्खाश्चासीना इति । अतिप्रसन्न अत्यर्थप्रसादम् । अन्यत्र स्वच्छजलम् । कमलाया लक्ष्म्या अधिवास आस्पदम् । अन्यत्र कमलानाम् । प्रजाना जनाना सन्तापस्य दुःखस्य । अन्यत्र शरीरतापस्य विच्छेदकर विनाशकरम् । अभिगम्य आभिगामिकगुणसम्पन्नम् । अन्यत्र अवगाह्यम् । महीयास महान्त ह्रद अगाधजलस्थानमिव । तमित्यनुषङ्ग । श्लिष्टोपमालङ्कार ॥ ॥ ४३ ॥

वक्तुम्मिथोराहुविचेष्टितानि
कर्णद्वयाभ्यर्णमुपेयिवांसौ ।
अलब्धकालाविव भानुचन्द्रौ
रथाङ्गशङ्खौ दधतं कराभ्याम् ॥ ४४ ॥

वक्तुमिति ॥ कराभ्या रथाङ्गशङ्खौ सुदर्शनपाञ्चजन्यौ दधत धारयन्तम् । तमोत्प्रेक्षते । राहोः विचेष्टितानि स्वभ्रमनरूपव्यापारान् मिथः रहसि वक्तु निवेदयितु कर्णद्वयस्य अभ्यर्ण समीप उपेयिवासौ उपगतौ राहुशिरश्छेदी खल्वयमिति तस्मै निवेदयितु उपागताविवेत्यर्थ. । ननु कस्मात् नोक्तवन्तावित्यत्राह— अलब्धकालौ अप्राप्तावसरौ । भक्तजननिरन्तरपा-

र्थ नादलब्धरहस्कानिति भाव । तादृशौ भानुचन्द्रौ सूर्यचन्द्रमसाविव । ते-
जोमयत्वाच्चक्रस्य सूर्यसादृश्यम् । धावल्याच्छत्रस्य चन्द्रसादृश्यम् । कर्णा-
भ्यर्णास्थान चोत्प्रेक्षाहेतुरित्यवगन्तव्यम् ॥ ॥ ४४ ॥

द्वारस्थसेनापतिचोदितेन
निवारिताः कंचुकिमण्डलेन ।
सुराः प्रमोदस्खलितैर्वचोभिः
स्थित्वैव ते व्योमनि तुष्टुवुस्तम् ॥ ४५ ॥

द्वारेति ॥ द्वारस्थेन सेनापतिना चोदितेन नियुक्तेन कंचुकिमण्ड-
लेन नेत्रिसमूहेन निवारिता रुद्धप्रवेशा ते सुरा व्योमन्येव आकाश एव
स्थित्वा प्रमोदेन हर्षेण हेतुना स्खलितै भ्रष्टस्थानवर्णस्वरै वचोभि वा-
ग्भि त तथाविधिनस्वरूप तुष्टुवु स्तुतवन्त ॥ ॥ ४५ ॥

नमः परस्मै पुरुषाय तुभ्यं
गिरान्धियामप्यपथि स्थिताय ।
अस्मान् पुनस्त्रातुमुदग्रमोहान्
कृपाबलात् कल्पितविग्रहाय ॥ ४६ ॥

भागीरथी पादकुशेशयात्ते
विनिर्गता विश्वमिदं पुनीते ।
कस्त्वां पुनर्भावयतो जनस्य
शुद्धिं परिच्छेत्तुमलं मनीषी ॥ ४७॥

भागीरथीति ॥ भागीरथी गङ्गा ते तव पादकुशेशयात् पादाब्जात् विनिर्गता विगळिता सती इदं विश्वं लोकं पुनीते पवित्रयति । त्वां भावयतः भजतः जनस्य शुद्धिं पावनतां परिच्छेत्तुं इयदितिपरिमातुं कः पुनः मनीषी विद्वान् अलं पर्याप्तः । न कोऽपि शक्तो भवतीत्यर्थः ॥ ॥ ४७ ॥

अनन्तशक्तेरपविक्रियस्य
तिस्रस्त्रिलोकीश्वर शक्तयस्ते ।
वितन्वते स्थावरजङ्गमाना-
मुत्पादनक्षेमविलोपनानि ॥ ४८ ॥

अनन्तेति ॥ हे त्रिलोकीश्वर त्रैलोक्यनाथ अनन्ता अनवसाना शक्तिः ऐश्वर्यं यस्य तस्य अपविक्रियस्य विकाररहितस्य अखण्डब्रह्मण इत्यर्थः । ते तव तिस्रः शक्तयः रजस्सत्वतमोरूपाः कारणशक्तयः स्थावराणां पर्वतादितृणपर्यन्तानां जङ्गमानां ब्रह्मादिपिपीलिकापर्यन्तानाञ्च भावानां उत्पादनं सृष्टिं क्षेमं रक्षां विलोपनं संहारं तानि वितन्वते विस्तारयन्ति । तथाचोक्तं— 'रजस्सृजति भूतानि सत्वं तु परिरक्षति तमस्संहरतीमानि त्रीण्यपीश्वरशक्तय इति ॥ ॥ ४८ ॥

कटाक्षमात्रेण भवांबुराशेः
पारं परं प्रापयितुस्त्रिलोकीम् ।

सकृन्नमस्या परमातरस्ते
यत्नानुरूपं हि फलं क्रियाणाम् ॥ ४९ ॥

कटाक्षेति ॥ त्रिलोकी त्रैलोक्यम् । तत्रस्था जना लक्ष्यन्ते । त्रैलोक्यवासिन इत्यर्थः । कटाक्षमात्रेण केवलकटाक्षेणैव नत्वपरसाधनेन । भवाम्बुराशेः संसाराब्धेः परं पारं अपारकूलं प्रापयितुः गमयितुः ते तव आतरः तरणकर्मणोवेतनम् ॥ 'आतरस्तरपण्यस्या'दित्यमरः । परं केवलं सकृत् एकवारं नमस्या नमस्कारः । ततोऽन्यत्किमपि नेत्यर्थः । उक्तमर्थमर्थान्तरन्यासेन समर्थयति— क्रियाणां व्यापाराणां फलं यत्नानुरूपं यत्नस्य सदृशम् । हीतिप्रसिद्धौ । अत्र तत्र प्रयासोऽल्प एव । अतोल्पमेव दीयत इति भावः ॥ ॥ ४९ ॥

त्वं ज्योतिरापस्त्वमसि त्वमुर्वी
त्वं व्योम वैश्वानरसारथिस्त्वम् ।
त्वं जीववर्गः परमस्त्वमात्मा
यन्नासि किंनाम जगत्पते तत् ॥ ५० ॥

त्वमिति ॥ ज्योतिः अग्निः, आपः जलं, उर्वी भूः, व्योम आकाशः, वैश्वानरसारथिः वायुः, जीववर्गः जीवावच्छिन्नशरीरसङ्घः, परम आत्मा परमात्मस्वरूपः, एतत्सर्वं त्वमेवासीत्यर्थः । हे जगत्पते यन्नासि यद्वस्तु त्वं न भवसि तद्वस्तु किं नाम किमपि नास्तीत्यर्थः ॥ ॥ ५० ॥

नवाभ्रवर्णं नळिनायताक्षं
पीताम्बरं हारकिरीटिनं त्वाम् ।
वयं तु सेवेमहि वीक्षमाणाः
सायुज्यमन्विच्छति कस्सुखार्थी ॥ ५१ ॥

नवेति ॥ नवाभ्रवर्णं नूतनघनच्छायम् । नलिनायताक्षं पद्मविशालनेत्रम् । पीतवर्णम् अम्बरं वासो यस्य तादृशम् । हारो मुक्तागुणः किरीटश्च यस्यास्तीति हारकिरीटिनम् । त्वां वयं तु वीक्षमाणा एव पश्यन्त एव सन्तः सेवेमहि । प्रार्थनायां लिङ् । एवमेव सर्वदा प्रत्यक्षवीक्षणभाग्यभाजो भवेमेत्यर्थः । सुखम् अर्थयितुं शीलमस्यास्तीति सुखार्थी । कः पुमान् सायुज्यं सहयोगः संयुक्तस्य भावः सायुज्यम् परब्रह्मणि लयः । तत् अन्विच्छति मार्गयति । सुखेच्छुः कोऽपि न तदिच्छतीत्यर्थः । ब्रह्मणि लीनस्य ईदृशम् अत्यन्तमनोहरं भवद्वपुः अवलोकयितुम् अशक्यत्वादिति भावः ॥५१॥

अलं न निर्देष्टुमियत्तया त्वा-
मशेषनाथ श्रुतिरग्रिमाऽपि।
स एव साक्षात् क्रियसे पुनस्त्व-
महो जितं नस्सुकृतैरनल्पैः ॥ ५२ ॥

अलमिति ॥ हे अशेषनाथ अग्रिमा प्रधानभूता श्रुतिः उपनिषत् साऽपि त्वां इयत्तया ईदृग्भूत इति निर्देष्टुं निगदितुं नालं न पर्याप्ता । स एव तादृग एव त्वं पुनः साक्षात् क्रियसे दृश्यसे । अस्माभिरिति शेषः । अहो नः अस्माकं अनल्पैः अपरिमितैः सुकृतैः पुण्यैः जितं सर्वस्मादुपरिवर्तितम् ॥ ॥ ५२ ॥

तृणाय मत्वा निखिलानि शार्ङ्गिन्
पदानि वैधेयमनोहराणि ।
आवृत्तिशून्यं परमं पदं ते
वाञ्छन्ति वैराग्यधना महान्तः ॥ ५३ ॥

तृणायेति ॥ हे शार्ङ्गिन् वैराग्यं सर्वत्र विरागः । स एव धनं येषां ते । महान्तः महाजनाः । मुमुक्षवः वैधेयमनोहराणि वैधेयानां मूर्खाणां

मनोहराणि मनोज्ञानि । 'मूर्खवैधेयबालिशा' इत्यमरः । निखिलानि समस्तानि पदानि तृणाय तृणमिति मत्वा आवृत्तिशून्यं पुनरावृत्तिरहितम् । अत एव परमं अत्युत्कृष्टं ते पदं वैकुण्ठाख्यं स्थानं वाञ्छन्ति प्राप्तुमिच्छन्ति । तादृशं पदं प्राप्तानां अस्माकं सुकृतैः जितमिति किमुच्यत इति भावः ॥

इति स्तुतो देवगणेन देवो
दयानिधिर्दानवकाळरात्रिः ।
न्यषीददुत्थाय भरावभुग्ने
भुजङ्गतल्पे भुवनैकनाथः ॥ ५४ ॥

इतीति ॥ इति एवंप्रकारं देवगणेन स्तुतः दयानिधिः दानवानां काळरात्रिः भुवनानां एकनाथः देवः उत्थाय भरेण हेतुना अवभुग्ने नमिते भुजङ्गमये तल्पे पर्यङ्के न्यषीदत् निषण्णः ॥ ॥ ५४ ॥

विष्वक्स वैकुण्ठविलासिनीनां
सलीलमान्दोळितचामराणाम् ।
निवारयन्नग्रकरारविन्दैः
कोलाहलं काञ्चनकङ्कणोत्थम् ॥ ५५ ॥

विष्वगिति ॥ सः देवः विष्वक् परितः सलीलं लीलया सह आन्दोळितानि धूतानि चामराणि वालव्यजनानि याभिः तादृशीनां वैकुण्ठविलासिनीनां काञ्चनकङ्कणेभ्यः कनकवलयेभ्यः उत्थं उद्गतं कोलाहलं कळकळशब्दं अग्रकरारविन्दैः करसरोजाग्रैः निवारयन् निरोधयन् । इदं वचन प्रस्तावद्योतकम् ॥ ॥ ५५ ॥

प्रसादवत्या कमलासनादीन्
सुरानशेषाननुगृह्य दृष्ट्या ।

उवाच वाचं दशनांशुपूरैः
समेधयन् दुग्धमयं पयोधिम् ॥ ५६ ॥

प्रसादवत्येति ॥ कमलासनादीन् महापुरस्सरान् अशेषान् सुरान् प्रसादवत्या प्रसन्नया दृष्ट्या कटाक्षपातेन अनुगृह्य अनुगृह्णन् दशनांशुपूरैः दन्तप्रभाप्रवाहैः दुग्धमयं क्षीररसरूपं पयोधिं समेधयन्. वर्धयन् दशनांशुदुग्धयोः सावर्ण्यादिति भावः। वाचं वक्ष्यमाणप्रकारं उवाच उक्तवानिति भावः ॥ ॥ ५६ ॥

अधिज्यकोदण्डधरो निषङ्गी
सन्नाहवान् पाणिधृतैकबाणः ।
अयं समाजो भवतां द्विपद्भ्यो
भयं समावेदयति स्फुटं मे ॥ ५७ ॥

अधिज्येति ॥ अधिज्यकोदण्डधरः आरोपितचापधारी निषङ्गी तूणीरवान् पाणौ धृतः एकः बाणः शरः येन सः। सन्नाहवान् सन्नद्धः अयं दृश्यमानः भवतां युष्माकं समाजः समूहः द्विपद्भ्यः शत्रुभ्यः सकाशात् भयं स्फुटं यथा तथा मे मह्यं निवेदयति विज्ञापयति। वाचं विनैव अवगमयतीत्यर्थः ॥ ॥ ५७ ॥

अलं विलम्बेन दिवौकसस्त-
न्निवेद्यतामद्य कुतो भयं वः ।
अयं करो दुष्टवधोत्सुकं मे
सुदर्शनं न क्षमते निरोद्धुम् ॥ ५८ ॥

अलमिति ॥ हे दिवौकसः देवाः विलम्बेन कालक्षेपेण अलम्। अद्य अस्मिन् काले वः युष्माकं कुतः कस्माज्जनात् भयं जातमिति शेषः। तत्

निवेद्यता विज्ञाप्यताम् । निवेदनमात्रमेवात्र कालक्षेप इति भाव । अय मे कर दुष्टाना वधे उत्सुक उद्युक्त सुदर्शन चक्र निरोद्धु वारयितु न क्षमते। न शक्नोति । शत्रुशब्दश्रवणात् पूर्वमेवेद प्रवर्तत इति भाव ॥ ॥ ५८ ॥

इत्यूचिवांसं परमं पुमांसं
नत्वा शिरोभिर्बहुशस्सुरास्ते ।
आरूढहर्षातिशयास्स्वमर्थ-
मारेभिरे वक्तुमशेषमेव ॥ ५९ ॥

इतीति ॥ ते सुरा इत्यूचिवास एव उक्तवन्त परम पुमास बहुश पुन पुन शिरोभि नत्वा आरूढहर्षातिशया वर्धितप्रमोदप्रकर्षास्सन्त स्वमर्थं आत्मकार्यं अशेषमेव सर्वमेव वक्तु निवेदयितु आरेभिरे प्रवृत्ता ॥५९॥

निवार्य सर्वानपि वक्तुकामान्
सेनापतिस्तानमरान् करेण ।
सविभ्रमप्रेरितया पुरस्थं
दृष्ट्या सरोजासनमाजुहाव ॥ ६० ॥

निवार्येति ॥ सेनापति विष्वक्सेन सर्वानपि क्रमेण वक्तुकामान् विवक्षमाणान् तान् तत्रागतान् अमरान् करेण करसज्ञया निवार्य निषिध्य सर्वै सहोक्त्या अस्पष्टतादोषस्स्यादित्याशयेन पुरस्थ पुरोभागवर्तिन सरोजासन ब्रह्माण सविभ्रम सविलास यथा तथा प्रेरितया प्रवर्तितया दृष्ट्या दृक्सज्ञया आजुहाव आनीतवान् । अस्मिन् वक्तु प्रवृत्ते सति अपरे स्वयमेव निशमयेयुरिति भाव ॥ ॥६०॥

अथागतस्तेन करे गृहीत्वा
नीतः प्रभोरन्तिकमब्जयोनिः ।

वक्तुं नियुक्तस्स कृतप्रणामः
विज्ञापयामास विनीतवेषः ॥ ६१ ॥

अथेति ॥ अथ आह्वानानन्तरं आगतः सः अब्जयोनिः सरोजासनः तेन सेनापतिना करे गृहीत्वा प्रभोः विष्णोः अन्तिकं समीपं नीतः प्रापितः वक्तुं नियुक्तः प्रेरितश्च सन् विनीतवेषः विनयोचिताकारः कृतप्रणामः विज्ञापयामास निवेदयाञ्चकार ॥ ॥६१॥

वयं त्वया दत्तविभूतयोऽपि
मोहातिरेकादभिमन्यमानाः ।
कृच्छ्रे पुनस्त्वां शरणं व्रजन्तः
हा निस्त्रपाणां प्रथमे भवामः ॥ ६२ ॥

विज्ञापनप्रकारमाह— वयमिति ॥ त्वया भवता दत्तविभूतयः प्रतिपादितसम्पदोऽपि वयं मोहातिरेकात् मोहस्य अतिशयाद्धेतोः अभिमन्यमानाः अहङ्कुर्वाणास्सन्तः पुनः कृच्छ्रे सङ्कटागमे त्वां शरणं रक्षितारं व्रजन्तः प्राप्नुवन्तः हा कष्टं निस्त्रपाणां निर्लज्जानां प्रथमे पुरस्सराः भवामः । इदानीं कृच्छ्रागमादेव अयमारम्भ इति तात्पर्यम् ॥ ॥ ६२ ॥

अपारदुःखार्णवपोतपात्रीं
त्वया कृपामुद्वहताऽतिगुर्वीम् ।
कृतभ्रताजन्मभुवाममीषा-
मस्माकमर्थे न किमन्वभावि ॥ ६३ ॥

अपारेति ॥ अपारस्य अनवधेः दुःखरूपस्य अर्णवस्य पोतपात्रीं नावं । तस्य तरणानुकूल्यात् तथारूपिणीं तादृशीं अतिगुर्वीं अतिगरीयसीं कृ-

पा उद्वहता त्वया कृतप्रनाया उपकृतेरस्मरणस्य जन्मभुवो उत्पत्तिस्था-
नाना अमीषाम् अत्र दृश्यमानाना अस्माक अर्थे प्रयोजने विषये किं ना-
स्वभावे कीदृश दु ख नानुभूतम् । बह्वनुभूतमेवेत्यर्थ ॥ ॥ ६३ ॥

मनस्विलोकस्य विगर्हणीये
प्रतिग्रहे वर्जयता जुगुप्साम् ।
पुरा पुरस्ताद्वलिदानवस्य
प्रसारितो नाग्रकरस्त्वया किम् ॥ ६४ ॥

मनस्वीति ॥ मनस्विन स्थिरचित्तस्य लोकस्य जनस्य विगर्हणीये
निन्दनीये प्रतिग्रहे दानस्वीकारे जुगुप्सा घृणा वर्जयता त्यजता त्वया पुरा
पूर्व बलिदानवस्य महाबले पुरस्तात् अग्रत अग्रकर कराग्र प्रसारित
विस्तारित न किम् । प्रसारित एवेत्यर्थ । 'तृणाल्लघुतरस्तूल तूलादपि
च याचक । वायुना किं न नीतोऽसौ याचयिष्यति मामिती'त्यादिवचनात्
अतिगर्हणीय अर्थित्वमिति भाव ॥ ॥ ६४ ॥

दैत्याधिराजेन हिरण्यनाम्ना
पर्याकुलं त्रातुमशेषलोकम् ।
इदं तु दिव्यं परिहृत्य रूपं
न त्वं किमासीर्नरतिर्यगात्मा ॥ ६५ ॥

अस्तु यान्ञालाघव, ततोऽपि विषम विकृतवेषस्वीकार इत्याह—
दैत्येति ॥ हिरण्यनाम्ना हिरण्यकशिपुना दैत्यानामधिराजेन चक्रवर्तिना हे-
तुना पर्याकुल विवश अशेषलोक समस्तजगत् त्रातु रक्षितु इद एव दृश्य-
मानं दिव्य अमानुष अखिलजनमनोभिराममित्यभिप्राय । तुशब्दो विशे-
षद्योतक । रूप सकलनिग्रह परिहृत्य त्यक्त्वा त्व नरतिर्यगात्मा नृसिंह-
रूप किं नासा । यद्यपि मिश्ररूपताऽतदुर्ग्रह । तथाऽपि साङ्काकृताऽ-

वक्तुं नियुक्तस्सकृतप्रणामः
विज्ञापयामास विनीतवेषः ॥ ६१ ॥

अथेति ॥ अथ आह्वानानन्तरं आगतः सः अब्जयोनिः सरोजासनः तेन सेनापतिना करे गृहीत्वा प्रभोः विष्णोः अन्तिकं समीपं नीतः प्रापितः वक्तुं नियुक्तः प्रेरितश्च सन् विनीतवेषः विनयोचिताकारः कृतप्रणामः विज्ञापयामास निवेदयाञ्चकार ॥ ॥६१॥

वयं त्वया दत्तविभूतयोऽपि
मोहातिरेकादभिमन्यमानाः ।
कृच्छ्रे पुनस्त्वां शरणं व्रजन्तः
हा निस्त्रपाणां प्रथमे भवामः ॥ ६२ ॥

विज्ञापनप्रकारमाह— वयमिति ॥ त्वया भवता दत्तविभूतयः प्रतिपादितसम्पदोऽपि वयं मोहातिरेकात् मोहस्य अतिशयाद्धेतोः अभिमन्यमानाः अहङ्कुर्वाणास्सन्तः पुनः कृच्छ्रे सङ्कटागमे त्वां शरणं रक्षितारं व्रजन्तः प्राप्नुवन्तः हा कष्टं निस्त्रपाणां निर्लज्जानां प्रथमे पुरस्सराः भवामः । इदानीं कृच्छ्रागमादेव अयमारम्भ इति तात्पर्यम् ॥ ॥ ६२ ॥

अपारदुःखार्णवपोतपात्रीं
त्वया कृपामुद्वहताऽतिगुर्वीम् ।
कृतघ्नताजन्मभुवाममीपा-
मस्माकमर्थे न किमन्वभावि ॥ ६३ ॥

अपारेति ॥ अपारस्य अनवधेः दुःखरूपस्य अर्णवस्य पोतपात्रीं नावं । तस्य तरणानुकूलत्वात् तथारूपिणीं तादृशीं अतिगुर्वीं अतिगरीयसीं कृ-

अनुग्रहस्यैतदपि प्रभूणां
प्रायःप्रकारान्तरमाश्रितेषु ॥ ६८ ॥

विश्वमिति ॥ हे नाथ विश्व सर्व विदन् जानन्नपि अविदन् अजानन्निव अस्मान् भयहेतु भीतिकारण त्व अनुयुङ्क्षे पृच्छसि । 'दुह्याच्'इत्यादिना पृच्छेरर्थग्रहणात् द्विकर्मकत्वम् । कथमिव अब्रवत् भवान् नेदमित्याह— एतदपि एवंविधं प्रश्नवाक्यमपि प्राय प्रभूणा आश्रितेषु निपन्नेषु अनुग्रहस्य प्रकारान्तर अन्यप्रकार । अतोऽयमनुग्रह एवेत्यर्थ ॥६८॥

तपोभिरुग्रैर्भगवन् सुराणा-
मवध्यभावं दनुजाः प्रपन्नाः ।
पाताळमुर्वीञ्च विजित्य दर्पा-
दुपक्रमन्ते दिवमद्य जेतुम् ॥ ६९ ॥

तपोभिरिति ॥ हे भगवन् दनुजा उग्रै घोरै तपोभि सुराणा देवानां अवध्यत्व प्रपन्नासन्त पाताळ उर्वीञ्च विजित्य विशेषेण जित्वा दर्पात् अवलेपाद्धेतो अद्य अस्मिन् काले दिव स्वर्गलोक जेतु उपक्रमन्ते प्रारमन्ते ॥ ॥६९॥

न जातु शून्यः कुलिशेन पाणि-
र्वक्षो न मुक्तं मणिकङ्कटेन ।
शक्रस्य दैत्यागतिशङ्किनोऽस्य
नासज्जितस्तिष्ठति वारणेन्द्रः ॥ ७० ॥

नेति ॥ दैत्याना आगतिं आगमन शङ्कितु शीलमस्येति तथाभूतस्य शक्रस्य इन्द्रस्य पाणि जातु कदाचिदपि कुलिशेन वज्रेण शून्य निरहित न भवति । वक्ष उरस्स्थल मणिमयेन कङ्कटेन वर्मणा न मुक्त नोज्झितं न ।

स्याकमर्थ इति महान् प्रयासः कृत इत्याशयः ॥　　॥६५॥

स्वविक्रमाक्रान्तसुरासुरस्य
रक्षःपतेर्निग्रहणादरेण ।
भूत्वा सुतः पङ्क्तिरथस्य राज्ञः
तां तामवस्थां न किमन्वभूस्त्वम् ॥६६॥

स्वेति ॥ स्वविक्रमेण आत्मपराक्रमेण आक्रान्ताः अभिभूताः सुराश्चासुराश्च येन तस्य रक्षःपतेः रावणस्य निग्रहणे निधने आदरेण तात्पर्येण हेतुना पङ्क्तिरथस्य राज्ञः दशरथस्य नरेन्द्रस्य सुतः श्रीरामभद्रः भूत्वा त्वं तां तां सीताविरहवालिवधसमुद्रबन्धादिकां अपरिमितां अवस्थां न किमन्वभूः । अन्वभूरेवेत्यर्थः ॥　　॥ ६६ ॥

अनेकधा पालयितारमेवं
संप्रत्यपि त्वां शरणं प्रपन्नाः ।
सन्तापहारी ननु चातकानां
भूयोऽपि भूयोऽपि पयोद एव ॥ ६७ ॥

किं बहुनेत्याह— अनेकधेति ॥ एवं उक्तप्रकारेण अनेकधा बहुधा पालयितारं त्रातारं त्वां सम्प्रत्यपि इदानीमपि शरणं प्रपन्नाः रक्षितारं मत्वा गता वयमिति शेषः । चातकानां स्तोकपक्षिणां भूयोऽपि भूयोऽपि पुनःपुनरपि सन्तापहारी पिपासादुःखलोपी पयोदः मेघ एव नान्यः । नन्विति प्रश्ने । एवमेव न किं जानासि । अतोऽन्यः कोऽप्याश्रयणीयः नास्तीति भावः ॥　　॥ ६७ ॥

विश्वं विदन्नप्यविदन्निव त्वं
नाथानुयुङ्क्षे भयहेतुमस्मान् ।

प्रवीरनिर्भर्त्सितकान्दिशीका

स्थातुं न जानाति पुरी सुराणाम् ॥७३॥

धनुर्धरेति ॥ सुराणां पुरी अमरावती धनुर्धरैः धानुष्कैः अध्यासिता-नि अधिष्ठितानि वप्रशीर्षाणि प्राकाराग्राणि यस्याः । द्वाःपालने द्वाररक्षणे व्यग्राः व्यापृताः समस्ताः निःशेषाः योधाः योद्धारः यस्याः । प्रवीरैः महावीरैः निर्भर्त्सिताः परिहसिताः कान्दिशीकाः भयपलायिताः ॥ 'कान्दिशीको भयद्रुत'इत्यमरः । तादृशाः जनाः यस्याः ॥ तथा सत्यपि स्थातुं न जानाति नोपायं पश्यति ॥ अस्यार्थस्य सिद्धये पुरीशब्देन तद्वासिनो जना लक्ष्यन्ते। धनुर्धरेत्यादिविशेषणविशिष्टाया पुर्याः स्थितः जन इति यावत् ॥ ७३ ॥

हाहेति विक्रोशदनाथमेत-

द्विश्वं जगत्पीडयतः प्रकामम् ।

त्वया विनाऽन्यस्त्रिषु विष्टपेषु

न कर्तुमीष्टे नरकस्य भङ्गम् ॥ ७४ ॥

हेति ॥ अनाथं रक्षितृरहितं अत एव हाहेति विक्रोशत् आक्रन्दत् एतत् विश्वं सर्वं जगत् लोकं प्रकामं अत्यर्थं पीडयतः व्यथयतः नरकस्य नरकासुरस्य भङ्गं नाशं कर्तुं त्रिषु विष्टपेषु भुवनत्रये त्वया विना भवन्तं वर्जयित्वा अन्यः जनः नेष्टे न शक्नोति ॥ ॥ ७४ ॥

प्रलंबकेशिप्रमुखास्तथाऽन्ये

परस्सहस्रं परियन्ति दैत्याः ।

निर्घातकल्पैर्निजसिंहनादै-

र्विदारयन्तो वियदाहवेषु ॥७५॥

प्रलंबेति ॥ प्रलंबकेशिप्रमुखाः तथाऽन्ये परस्सहस्रं सहस्राधिकम्

वारणेन्द्रः ऐरावतः आसज्जितः सन्नद्धीकृतः न तिष्ठति । शृङ्खलाङ्कुशादिप-
रिहीनो न तिष्ठतीत्यर्थः ॥ ॥ ७० ॥

दण्डं यमात्पाशमपामधीशा-
द्गदां कुबेरात्कुलिशं मघोनः ।
आदातुकामः प्रहिणोति दूतान्
कंसस्स्वदोर्विक्रमनिर्जिताशः ॥ ७१ ॥

सामान्येनोक्त्वा विशिष्य विज्ञापयति— दण्डमिति ॥ स्वस्य दोर्वि-
क्रमेण भुजप्रतापेन निर्जिताः अतितरां अभिभूता आशा दिशः येन । ता-
दृशः कंसः यमात् दण्डं, अपामधीशात् वरुणात् पाशं, कुबेरात् धनदात्
गदां, मघोनः इन्द्रात् कुलिशञ्च, इत्येतानि आदातुकामः आहर्तुमिच्छन् दू-
तान् प्रहिणोति प्रचोदयति । मया सह योद्धुं असमर्थानां आयुधेन किं
प्रयोजनमित्यभिप्रायेणेति भावः ॥ ॥ ७१ ॥

रणे विनिर्जित्य बलं सुराणां
पराक्रमेणाप्रतिमेन वीरः ।
भोजेश्वरः क्रीडति सावरोधो
मूलेषु सम्प्रत्यमरद्रुमाणाम् ॥ ७२ ॥

रण इति ॥ वीरः उत्साहशाली भोजेश्वरः कंसः रणे युद्धे सुराणां
बलं सैन्यं अप्रतिमेन अतुलेन पराक्रमेण विनिर्जित्य अभिभूय सम्प्रति
इदानीं सावरोधस्सन् अमरद्रुमाणां पारिजातादीनां मूलेषु अधोवाटिकासु
क्रीडति विहरति ॥ ॥ ७२ ॥

धनुर्धराध्यासितवप्रशीर्षा
द्वाःपालनव्यग्रसमग्रयोधा ।

विधिर्व्यरंसीद्विहितप्रणामः
स चापि गंभीरमुवाच देवः ॥ ७८ ॥

तदिति ॥ तस्मात् कारणात् अस्मदीय अस्मत्सम्बन्धि एतत् आवेदन निज्ञापन श्रुत्वा आकर्ण्य प्रभु स्वामी प्रमाण प्रमातृभूत । आकर्णनस्य प्रमातृभावस्य च एककर्तृत्वात् अत्र उक्तौ न दोष । इत्येनप्रकार उदीर्य उक्त्वा विहितप्रणाम कृताञ्जलिस्सन् विधि ब्रह्मा व्यरसीत् विरत वचनोऽभूत् । स देव महाविष्णुरपि च गम्भीर पुष्कलार्थ यथा तथा उवाच उक्तवान् ॥ ॥ ७८ ॥

अलं विषादेन दिवौकसो वः
समीहितं हस्तगतं मनुध्वम् ।
व्रतं हि मे केवलमेतदेव-
संरक्षणं यच्छरणागतानाम् ॥ ७९ ॥

अलमिति ॥ हे दिवौकस देवा विषादेन दु खेन अल इत पर न विषाद कार्य इत्यर्थ । व युष्माक समीहित शत्रुनिग्रहाभिलाष हस्तगत करस्थ सिद्धमेवेत्यर्थ । मनुध्व अवबोधत । शरणागताना रक्षानिमित्तमागताना जनाना सरक्षण सम्यक् पालनमिति यत् केवल एतदेव मे व्रत दीक्षापरिग्रह । हि यस्मादर्थे तस्मात् उक्तमल विषादेनेत्यर्थ ॥ ॥ ७९ ॥

मामर्थयन्ते वसुदेवपत्न्यौ
पत्नीच नन्दस्य सुतं गुणाढ्यम् ।
अंशद्वयेन व्रतकर्शिताङ्गीः
तिस्रोऽपि ताः पुत्रवतीर्विधास्ये ॥ ८० ॥

भाव्यच प्रयोजनमस्ती याह— मामिति ॥ वसुदेवस्य आनकदुन्दु

ख्या । 'परश्शतादीनामुपसंख्यान'मिति सिद्धाऽयं शब्दः । तथा अन्ये तद्व्यतिरिक्ताश्च दैत्याः निर्घातकल्पे स्तनितसदृशे निजे आत्मीये सिंहनादे वियत् आकाशं विदारयन्तः भिन्दन्तः आहवेषु युद्धेषु परियन्ति परितो गच्छन्ति । युद्धाय सर्वतस्संचरन्तीत्यर्थः ॥ ॥ ७५ ॥

षट्सूनवस्सन्ति हिरण्यनाम्नो
दैत्यस्य पाताळतलाधिवासैः ।
तैर्नः क्रियन्ते दुरितानि यानि
वक्तुं न शक्यानि मुकुन्द तानि ॥ ७६ ॥

षडिति ॥ हिरण्यनाम्नः दैत्यस्य दानवस्य सूनवः पुत्राष्षट्सन्ति । पाताळतले अधिवासः येषां तैः हिरण्यसूनुभिः नः अस्माकं सम्बन्धे यानि दुरितानि दुश्चेष्टितानि क्रियन्ते हे मुकुन्द, तानि वक्तुं ईदृशानीति निवेदयितुं न शक्यानि शक्यानि न भवन्ति ॥ ॥७६॥

तेषां महीध्रप्रतिमाकृतीनां
भारं मही सोढुमसावशक्ता ।
अस्मान् पुरस्कृत्य भवत्सकाशं
प्राप्ता निजक्लेशनिवेदनाय ॥ ७७ ॥

तेषामिति ॥ महीध्रप्रतिमाः पर्वततुल्याः आकृतयः शरीरसंस्थानानि येषां तेषां इह प्रस्तुतानां भारं सोढुं अशक्ता असमर्था असौ मही भूमिदेवी निजक्लेशस्य आत्मदुःखस्य निवेदनाय तुभ्यं विज्ञापयितुं अस्मान् पुरस्कृत्य अग्रे कुर्वाणा स्त्रीत्वेन स्वयं आगन्तुं अशक्यत्वादिति भावः । भवत्सकाशं भवतस्समीपं प्राप्ता आगता ॥ ॥ ७७ ॥

तदेतदावेदनमस्मदीयं
श्रुत्वा प्रमाणं प्रभुरित्युदीर्य ।

णै. अपाकरिष्ये समुद्धृत्य दूरीकरिष्ये । शल्योद्धरणसाधनत्वाभिप्रायेण शरे-
रित्युक्तम् । शरैश्शत्रून् निहन्मि इति यावत् ॥ ॥८२॥

इति तममरलोकं सान्त्वयित्वा स देवः
सपदि नवघनाभः पद्मनाभस्तिरोभूत् ।
स च विहितनमस्यस्तस्य वाचं प्रशंसन्
निजपदमभिपेदे हर्षपर्याकुलात्मा ॥८३॥

इति सुकुमारकृतौ कृष्णविलासकाव्ये
॥ प्रथमस्सर्गः ॥

इतीति ॥ इलि एवं प्रकारं तं तथा तत्रागत अमरलोकं देवसमूह
सान्त्वयित्वा सामोपायेन आवर्ज्य नवघनस्य नूतनमेघस्येव आभा यस्य ता-
दृशः पद्मनाभः देवः सपदि तिरोभूत् अन्तर्हितः । स च अमरलोकश्च हर्षे-
ण सन्तोषेण पर्याकुलात्मा विवशमनश्शरीरवृत्तिः विहितनमस्यः कृतप्रणामः
तस्य पद्मनाभस्य वाचं अलं विषादेनेत्यादिवचनं प्रशंसन् स्तुवन् निज आ-
त्मीय पदं स्वर्गलोकं अभिपेदे प्राप्तवानिति सकलमवदातं मङ्गलम् ॥८३॥

इति रामपाणिवादविरचितायां विलासिन्याख्यायां
श्रीकृष्णविलासव्याख्यायां
॥ प्रथमस्सर्गः ॥



भे पत्न्यौ रोहिणीदेवक्यौ नन्दस्य नन्दगोपस्य पत्नी यशोदा च मा गुणा- ढ्य गुणैर्गरिष्ठ सुत पुत्र अर्थयन्ते याचन्ते । व्रतेन ममाराधनरूपेण तपसा कर्शिताङ्गी विशोषितशरीरा ता तिस्रोऽपि अशद्वयेन कलाद्वितयेन पुत्र वती सत्पुत्रवत्त्वयुक्ता विधास्ये कल्पयिष्ये । विधानफलस्य कर्तृगामित्वात् आत्मनेपदम् । कर्तृगामित्वञ्च दुष्टनिग्रहकार्यस्य आत्मनिष्ठत्वम् ॥ ८० ॥

इयञ्च लोकत्रितयस्य माता
मायाभिधाना मम शक्तिरग्र्या।
कार्याणि वः कान्यपि कर्तुकामा
जनिष्यते जन्मविनाशशून्या ॥ ८१ ॥

इयमिति ॥ लोकत्रितयस्य माता सवित्री मायाभिधाना मम अग्र्या प्राधान्यभूता शक्ति इयञ्च मया सहसा दृश्यमानेत्यर्थ । जन्मविनाशाभ्यां जननमरणाभ्या शून्या रहिताऽपीत्यर्थात् । व युष्माक कान्यपि इदानीं अ- निर्देश्यानि फलेन ज्ञातव्यानीति भाव । कार्याणि प्रयोजनानि कर्तु उप- पादयितु उर्व्यां भुवि जनिष्यते प्रादुर्भविष्यति ॥ ॥ ८१ ॥

तद्गच्छत स्वर्गमपेतखेदाः
न कालहानिः परिशङ्कनीया।
अनेन शार्ङ्गेण शपे शरैर्वः
सद्यो मनश्शल्यमपाकरिष्ये ॥ ८२ ॥

तदिति ॥ तत् तस्माद्धेतो अपेतखेदा त्यक्तशोकास्सन्त यूय स्वर्ग स्वस्थान गच्छत । कालहानि विलम्ब न परिशङ्कनीय । सा न भविष्य- तीत्यर्थ । अथ प्रतिजानीते— अनेन मत्करस्थितेन शार्ङ्गेण धनुषा शपे श- पथ करोमि । व युष्माक मनसि शल्य दु ख सद्य क्षणादेव शरै बा-

वर्तिनी अत एव चिरेण किञ्चित् कालविलम्बेन प्रयत्नेनेत्यर्थः । अज्ञानात् विदितवान् । पल्लवमञ्जर्यादिलताधर्मणा अत्रापि सादृश्येन सम्भावितत्वादिति भावः ॥ ॥ २ ॥

सा सन्नताङ्गी नियमावसाने
ज्येष्ठाय तस्मै विदधे नमस्याम् ।
स चाशिषा तामनुगृह्य साध्वीं
भोजेश्वरो वाक्यमिदं बभाषे ॥ ३ ॥

सेति ॥ सन्नताङ्गी सुदती सा देवकी नियमस्य अवसाने समाप्तौ ज्येष्ठाय अग्रजाय तस्मै कंसाय नमस्या नमस्कृतिं विदधे कृतवती । सः कंसश्च साध्वीं आचारवतीं तां आशिषाऽनुगृह्य भोजानामीश्वरः अनेन अन्यानपेक्षस्वेच्छाभिधानत्वं दर्शितम्।इदं वक्ष्यमाणं वाक्यं बभाषे भाषितवान्॥

अद्यापि बालाऽसि सुताननेकान्
प्रसोष्यसे किं व्रतयातनाभिः ।
पश्याधुना पल्लवसूतिकाले
किं कल्पते चूतलता फलाय ॥ ४ ॥

अद्यापीति ॥ अद्यापि इदानीमपि त्वं बालाऽसि बाल्यं नातिवर्तसे । अतोऽनेकान् बहून् सुतान् प्रसोष्यसे जनयिष्यसि । व्रतरूपाभिः यातनाभिः वेदनाभिः किं प्रयोजनं पश्य जानीहि । अधुना चूतलता पल्लवानां सूतेः उद्गतस्य काले फलाय फलमुद्भावयितुं किं कल्पते किमर्हति । तत्र न समर्था भवतीत्यर्थः ॥ ॥ ४ ॥

कृशाऽसि कामं विरम प्रयासा-
न्मनोभिरामानुपभुङ्क्ष्व भोगान् ।

॥ श्रीरस्तु ॥

## ॥ द्वितीयः सर्गः ॥



अथैकदा पुत्रफलानि सम्यक्
व्रतानि बाह्योपवने चरन्तीम् ।
रथेन कंसो वसुदेवयुक्तः
स्वसारमालोकयितुं जगाम ॥ १ ॥

अथ भगवत्प्रतिज्ञात अर्थ अवतारयितु अस्य अधिकरणभूत प्रकरण उपन्यस्यति— अथेत्यादिना ॥ अथ अमरान् प्रति भगवत्प्रसादस्यानन्तर एकदा एकस्मिन् दिने वसुदेवेन युक्त सहित कस पुत्रफलानि पुत्रजनन फल प्रयोजन येषा तादृशानि व्रतानि नियमान् बाह्योपवने बाह्योद्याने सम्यक् साधु चरन्तीं समनुतिष्ठन्तीम् । चरतिरत्रानुष्ठाने वर्तते । स्वसार देवकीं आलोकयितु द्रष्टु रथेन साधनेन जगाम गतवान् ॥ १ ॥

स्फुरत्प्रभापल्लविताङ्गयष्टिं
कथञ्चिदूढस्तनमञ्जरीकाम् ।
तत्राळकैष्षट्पदिनीमजाना-
त्स तां लतामध्यगतां चिरेण ॥ २ ॥

स्फुरदिति ॥ स कस तत्र बाह्योपवने स्फुरन्त्या प्रकाशमानया प्रभया कान्त्या पल्लविता सञ्जातपल्लवा अङ्गयष्टि प्रशस्तशरीर यस्या।कथञ्चित् प्रयत्नेन धृतो ऊढौ स्तनावेव मञ्जर्यौ स्तबकौ यया तादृशीम् । अळकै चूर्णकुन्तळै षट पदिनीं षट पदवतीं ता देवकीं लताना मध्यगता मध्य

र्वतिनीं अत एव चिरेण किञ्चित् कालविलम्बेन प्रयत्नेनेत्यर्थः । अजानात् विदितवान् । पट्टमहिष्यादिलताधर्मेणा अत्रापि सादृश्येन सम्भावितत्वादिति भावः ॥ ॥ २ ॥

**सा सव्रताङ्गी नियमावसाने**
**ज्येष्ठाय तस्मै विदधे नमस्याम् ।**
**स चाशिषा तामनुगृह्य साध्वीं**
**भोजेश्वरो वाक्यमिदं बभाषे ॥ ३ ॥**

सेति ॥ सव्रताङ्गी सुदती सा देवकी नियमस्य अवसाने समाप्तौ ज्येष्ठाय अग्रजाय तस्मै कंसाय नमस्या नमस्कृतिं विदधे कृतवती । स कंसश्च साध्वीं आचारवतीं तां आशिषाऽनुगृह्य भोजानामीश्वरः अनेन अन्यानपेक्षस्वेच्छाभिधानत्वं दर्शितम् । इदं वक्ष्यमाणं वाक्यं बभाषे भाषितवान् ॥

**अद्यापि बालाऽसि सुताननेकान्**
**प्रसोष्यसे किं व्रतयातनाभिः ।**
**पश्याधुना पल्लवसूतिकाले**
**किं कल्पते चूतलता फलाय ॥ ४ ॥**

अद्यापीति ॥ अद्यापि इदानीमपि त्वं बालाऽसि बाल्यं नातिवर्तसे । अतोऽनेकान् बहून् सुतान् प्रसोष्यसे जनयिष्यसि । व्रतरूपाभिः यातनाभिः वेदनाभिः किं प्रयोजनं पश्य जानीहि । अधुना चूतलता पल्लवानां सूतेः उद्गतस्य काले फलाय फलमुद्भावयितुं किं कल्पते किमर्हति । तत्र न समर्था भवतीत्यर्थः ॥ ॥ ४ ॥

**कृशाऽसि कामं विरम प्रयासा-**
**न्मनोभिरामानुपभुङ्क्ष्व भोगान् ।**

अङ्गानि ते सन्नतगात्रि दुःखं
मृणाळकल्पानि कथं सहेरन् ॥ ५ ॥

कृशेति ॥ त्वं काम अत्यर्थं कृशा दुर्बलाऽसि । प्रयासात् नियम-प्रयत्नात् विरम निवर्तस्व । मनोभिरामान् भोगान् सुखसाधनानि उपभुङ्क्ष्व अनुभव । हे सन्नतगात्रि दौर्बल्यात् अवनतशरीरे मृणाळकल्पानि बिसलतामृदूनि ते अङ्गानि अन्यथा दुःखं नियमक्लेशं कथं सहेरन् न सहिष्यन्त इत्यर्थः ॥ ॥ ५ ॥

तामेवमुक्त्वा स तु साभ्यनुज्ञां
रथं समारोप्य सहैव पत्या ।
प्रयातुकामः पुरमन्तरिक्षे
शुश्राव वाचं शतधारकल्पाम् ॥ ६ ॥

तामिति ॥ स कंसस्तु एवंप्रकारं उक्त्वा साभ्यनुज्ञां सानुवादां तां देवकीं पत्या भर्त्रा सहैव रथं समारोप्य पुरं राजधानीं प्रति प्रयातुकामं गन्तुमिच्छन् अन्तरिक्षे व्योम्नि शतधारकल्पां प्रायेण वज्रतुल्यां वाचं शुश्राव श्रुतवान् ॥ ॥ ६ ॥

त्वदन्तिकस्था सहजाशमीयं
प्रसोष्यते पुत्रमयं कृशानुम् ।
मरुत्समिद्धस्स तु दुर्निवारः
त्वां भस्मसात्कंस करिष्यतीति ॥७॥

तामेव वाचमाह— त्वदिति ॥ हे कंस त्वदन्तिकस्था तव समीप-स्थितेयं सहजा सहजैव शमी वह्निद्रुमः शमीवृक्षाद्धि कृशानुरुत्पद्यत इति प्रसिद्ध्या शमीत्वारोपणम् । पुत्रमयं पुत्रस्वरूपं कृशानुं अग्निं प्रसोष्यते

नयिष्यति । दुर्निवारः निवारयितुमशक्यः सः कृशानुस्तु मरुता वायुना दैवेन वा समिद्धः वर्धितस्सन् त्वां भस्मसात्करिष्यति कात्स्न्र्येन भस्मसान्नेष्यतीत्येवं शुश्रवेति सम्बन्धः ॥ ॥ ७ ॥

निशम्य तद्भूतवचो निकामं
कंसस्स रोपागमदुर्निरीक्ष्यः ।
कृपां परित्यज्य कृपाणपाणिः
स्वसुर्वधाय स्वयमुद्यतोऽभूत् ॥ ८ ॥

निशम्येति ॥ सः कंसः तद्भूतवचोऽशरीरवचनं निशम्य निकामं अत्यर्थं रोषागमेन कोपप्राप्त्या दुर्निरीक्ष्यः दुःखदृश्यस्सन् कृपां दयां परित्यज्य कृपाणपाणिः खड्गपाणिः स्वयं आत्मनैव स्वसुः भगिन्याः वधाय निग्रहाय उद्यतः उद्युक्तोऽभूत् ॥ ॥ ८ ॥

नृशंसकृत्ये नितरां प्रवृत्त-
मुदग्रकोपस्फुरिताधरोष्ठम् ।
प्रसादयन्नानकदुन्दुभिस्त-
मुवाच धीमानुपपत्तियुक्तम् ॥ ९ ॥

नृशंसेति ॥ धीमान् बुद्धिमान् आनकदुन्दुभिः वसुदेवः नृशंसकृत्ये पापकर्मणि नितरां अधिकं प्रवृत्तं उद्युक्तं उदग्रेण प्रवृद्धेन कोपेन हेतुना स्फुरितो कम्पितो अधरोष्ठौ यस्य तं कंसं प्रसादयन् प्रसादयितुं व्यवस्यन् उपपत्त्या युक्त्या युक्तं यथा भवति तथा उवाच उक्तवान् ॥ ॥ ९ ॥

अलं तवानेन वधोद्यमेन
त्वया विधेयो नृपते विमर्शः ।

किमेष नाश्रावि विचारशून्यं
व्रजन्त्यनर्था इति साधुवादः ॥ १० ॥

अलमिति ॥ हे नृपते तव अनेन अत्र दृश्यमानेन वधोद्यमेन निग्र-होत्साहेन अलं कृतम् । त्वया विमर्शः विचारः विधेयः कर्तव्यः । विचारशू-न्यं अविवेकिनं अनर्थाः आपदः व्रजन्तीति साधूनां सज्जनानां वादः । तथा च— 'सहसा विदधीत न क्रियामविवेकः परमापदां पद'मिति । एषः नाश्रावि किं न श्रुतः किम् ॥ ॥ १० ॥

भयेन युद्धेषु पुरन्दरादीन्
सुरान् पराचस्त्रपया विमुञ्चन् ।
महीश्वर स्त्रीवधपातकेऽस्मिन्
कथं तवोपक्रमते कृपाणः ॥ ११ ॥

भयेनेति ॥ हे महीश्वर युद्धेषु भयेन भीत्या पराचः पराङ्मुखान् पुरन्दरादीन् इन्द्रादिसुरान् त्रपया 'विमुक्तकेशं विमुखं निरायुध'मित्यादिव-चनश्रवणात् विमुखवधे लज्जया विमुञ्चन् त्यजन् तव कृपाणः खड्गः अस्मिन् स्त्रीवधपातके स्त्रीहत्यादुरिते विषये कथं उपक्रमते आरभते ॥ ॥ ११ ॥

अनेन किं वा तव जीवितेन
यद्रक्षणं स्यात्सहजावधेन ।
गुणेन केनापि हि लब्धनाम्ना-
मपि स्वनाशादयशो गरीयः ॥ १२ ॥

अनेनेति ॥ सहजायाः स्वसुः वधेन यस्य रक्षणं स्यात् सम्भवेत् तव अनेन एवंविधेन जीवितेन किं फलम् । केनापि गुणेन वीर्यशौर्यविद्यावि-नयवित्तवत्त्वादिषु अन्यतमेनापि लब्धनाम्नां प्राप्तयशसां जनानां स्वनाशात्

आत्मनाशादपि अयशः दुष्कीर्तिः गरीयः गुरुतरम् । वरं आत्मनाशः न तु यशोनाश इत्यर्थः । हि प्रसिद्धौ । किं पुनः समग्रगुणसम्पन्नस्य भवत इति भावः ॥

प्रपद्यमानस्य सदाऽभिवृद्धिं
दिवानिशं प्रीणयतश्च लोकान् ।
भवद्यशश्चन्द्रमसोऽस्य माभू-
न्नवः कळङ्को भगिनीवधेन ॥ १३ ॥

प्रपद्यमानस्येति ॥ सदा सर्वदा अभिवृद्धिं वर्धमानता प्रपद्यमानस्य प्राप्नुवतः । अय अन्यः चन्द्रमसा व्यतिरेकः । तस्य सदावृद्ध्यभावात् । एवं उत्तरविशेषणेऽपि । दिवानिशं अहर्निशं लोकं प्रीणयतः प्रमोदयतश्च अस्य भवतः यशस एव चन्द्रमसः चन्द्रस्य भगिनीवधेन हेतुना नवः कळङ्कोऽपवादः । 'कळङ्कोऽङ्कापवादयो'रित्यमरः । माभूत् न भवतु ॥ ॥ १३ ॥

स्वसुर्वधेनास्य भवेदकीर्तिः
तेन त्यजेयुस्सुहृदोऽपि भीताः ।
इत्येव नूनं भुजनिर्जितैस्तैः
सुरैः प्रयुक्तस्सुमहानुपायः ॥ १४ ॥

स्वसुरिति ॥ अस्य कंसस्य स्वसुर्वधेन हेतुना अकीर्तिः अयशः भवेत् । सुहृदोऽपि अस्य बन्धवोऽपि भीतास्सन्तः एनं कंसं त्यजेयुः उपेक्षेरन् । इति एवप्रकारं निश्चित्येत्यर्थः । भुजनिर्जितैः त्वद्भुजबलपराजितैः तैः सुरैः प्रयुक्तः उपपादितः सुमहान् अतिमहत्तरः एषः उपायः त्वज्जयोपायः नूनं ध्रुवम् ॥ ॥ १४ ॥

कालेन तद् द्रक्ष्यसि यन्मदुक्तं
माभूत्तवास्मिन् विषयेऽपि शङ्का ।

तथाऽपि चेतस्तव शङ्कते चेत
आकर्ण्यतां तर्ह्यपरः प्रकारः ॥ १५ ॥

कालेनेति ॥ मदुक्त मयोक्तं यत् तत् त्वं कालेन कैश्चिद्दिनैः द्रक्ष्यसि। तत्र अस्मिन् विषये अर्थेऽपि शङ्का एवं वा न वेति शङ्का माभूत्। एवमेवेत्यर्थः। तथाऽपि तव चेतः मनः शङ्कते शङ्का न परित्यजति चेत् तर्हि अपर अन्यः प्रकारः आकर्ण्यतां श्रूयताम् ॥ ॥ १५ ॥

सर्वाण्यपत्यानि वशे तवाहं
जातानि जातानि समर्पयिष्ये।
तन्निग्रहं वा तदनुग्रहं वा
विचिन्त्य कर्तासि दशानुरूपम्॥ १६ ॥

स कीदृश इति चेदत्राह— सर्वाणीति ॥ जातानि जातानि उद्भूतमात्राणि सर्वाणि अपत्यानि पुत्रान् तव वशे तवाधीनं अहं समर्पयिष्ये प्रदास्यामि। तन्निग्रहं तेषां वधं वा तेषां अनुग्रहं वा विचिन्त्य विचार्य दशानुरूपं अवस्थासदृशं यथा तथा कर्तासि करिष्यसि ॥ ॥ १६ ॥

किं बुद्धिमान्द्येन निजेन तस्य
किं भागधेयेन वराङ्गनायाः।
बलेन किं वा भवितव्यतायाः
तथेति जग्राह वचस्तदीयम्॥ १७॥

किमिति ॥ सः कंसः तदीयं वसुदेवसम्बन्धि वचः वचनं तथेति एवमिति जग्राह गृहीतवान्। अत्र कविः कारणं कल्पयति— तस्य कंसस्य निजेन आत्मीयेन बुद्धेः मान्द्येन मन्दतया किं मन्दबुद्धित्वाद्वेत्यर्थः। वराङ्ग-

भाया उत्तमास्त्रिया तस्या देवक्या भागधेयेन भाग्येन किम् । भवितव्य-
ताया अवश्यम्भाविन देवस्य बलेन किम् । सर्वथाऽनेन गृहीतमेवेत्यर्थ ॥

वधप्रवृत्तो वसुदेवमन्त्र-
प्रभावसंस्तम्भितघोरकर्मा ।
निवृत्य निस्त्रिंशमहाभुजङ्गो
महीभृतः कोशबिलं विवेश ॥ १८ ॥

वधेति ॥ निस्त्रिंश खड्ग । स एव महासर्प । वधे देवकीनिग्र-
हे प्रवृत्त आरब्धोऽपि वसुदेवमन्त्रस्य वचनरूपमन्त्रोच्चारणस्य प्रभावेन स
स्तम्भित निवारित घोर कर्म क्रूरव्यापार यस्य तथा । स निवृत्य विमु
खीभूय महीभृत कसस्य पर्वतस्येति च । कोशमेव बिल गुहा प्रविवेश
प्रविष्टवान् ॥ ॥ १८ ॥

सत्या नु सा स्यादशरीरिणी वाक्
सत्यं किमेतद्वसुदेववाक्यम् ।
वितर्कयन्नेवमुदस्तकेतुं
पुरीं प्रपेदे मणितोरणाढ्याम् ॥ १९ ॥

सत्येति ॥ सा तदानीं श्रुता अशरीरिणी वाक् आकाशवाणी सत्या
परमार्था स्यान्नु । एतत् वसुदेववाक्य अपत्यानि समर्पयिष्ये इत्येवरूप स-
त्य किम् । एवं वितर्कयन् विकल्पयन् स उदस्ता उच्छ्रिता केतवो य-
स्या ता मणिमयेन तोरणेन बहिर्द्वारेण । 'तोरणोऽस्त्री बहिर्द्वार'मित्यमर ।
आढ्या श्रेष्ठा पुरीं प्रपेदे प्राप्तवान् ॥ ॥ १९ ॥

आलोकनैर्मौलिषु भूपतीनां
आसञ्जयन्नञ्जलिबन्धनानि ।

स वैमनस्येन मुखस्थितेन
भयावहस्स्वं भवनं जगाम ॥ २० ॥

आलोकनैरिति ॥ मुखस्थितेन मुखेन प्रकाशितेन वैमनस्येन दुःखेन भयावहः द्रष्टॄणा भीतिमुत्पादयन् स कंसः आलोकनैः भूपतीनां राज्ञां मौलिषु मकुटाग्रेषु अञ्जलिबन्धनानि आसञ्जयन् आकलयन् कुर्वन्नित्यर्थः । स्वं आत्मीयं भवनं जगाम गतवान् ॥ ॥ २० ॥

विशङ्कमानस्स गृहोपकण्ठे
तौ सद्मनि क्वापि विधाय गुप्तौ ।
पराक्रमाक्रान्तसमस्तलोकः
पुरेव भोगानयमन्वभुङ्क्त ॥ २१ ॥

विशङ्कमान इति ॥ अथ कंसः विशङ्कमानः शङ्कायुक्तः तौ देवकीवसुदेवौ गृहस्य उपकण्ठे समीपे क्वापि सद्मनि कचित् गृहे गुप्तौ रक्षितौ नियमितावित्यर्थः । विधाय कृत्वा पराक्रमेण अभिभूतसर्वलोकस्सन् पुरेव यथापुरं भोगान् सुखसाधनानि अन्वभुङ्क्त अनुभूतवान् ॥ ॥ २१ ॥

माया हरेस्साऽथ हिरण्यपुत्रान्
यान्देवकीगर्भगतानकार्षीत् ।
भोजेश्वरस्सत्वरमेत्य भीत्या
तान् जातमात्रानवधीत् क्रमेण ॥ २२ ॥

मायेति ॥ अथ तदनन्तरं हरेः विष्णोः माया योगनिद्रा सा यान् हिरण्यपुत्रान् देवकीगर्भगतान् प्रवेशितान् अकार्षीत् । जातमात्रान् परं जातानेव जननसमय एवेत्यर्थः । तान् भोजेश्वरः कंसः भीत्या हेतुना सत्वरं एत्य अकुण्ठं गत्वा क्रमेण अवधीत् निहतवान् ॥ ॥ २२ ॥

जगद्विभूत्यै परमस्य पुंसः
यो देवकीगर्भमविक्षदंशः ।
आकृष्य तस्मान्मुरवैरिमाया
तं रोहिणीगर्भगतं चकार ॥ २३ ॥

जगदिति ॥ परमस्य पुंसः हरेः योऽंशो भागः जगतां विभूत्यै सम्पदे देवक्या गर्भमविक्षत् प्रपेदे । मुरवैरिणः माया तस्मात् देवकीगर्भात् आकृष्य तं अंशं रोहिण्यागर्भगतं चकार कृतवती ॥ ॥ २३ ॥

चकास सप्तच्छदपाण्डरेण
सुतेन सा गर्भतिरोहितेन ।
वलाहकान्तर्हितशीतभानोः
दिशो दशां वृत्रजितः प्रपन्ना ॥ २४ ॥

चकासेति ॥ सा रोहिणी सप्तच्छदवत् पाण्डरेण धवलेन गर्भेण तिरोहितेन आच्छादितेन सुतेन हेतुना वलाहकैः मेघैः अन्तर्हितशीतभानोः तिरोहितचन्द्रायाः वृत्रजितः दिशः पूर्वाशायाः दशां अवस्थां प्रपन्ना सती चकास दीप्यते स्म ॥ ॥ २४ ॥

ततस्समाह्लादनमीक्षणानां
असूत पुत्रं शरदिन्दुकल्पम् ।
प्रकर्षमापन्नुदयेन यस्य
सद्यस्समुद्रा इव सत्त्ववन्तः ॥ २५ ॥

तत इति ॥ ततोऽनन्तरं सा ईक्षणानां दृशां समाह्लादनं आनन्दकरं शरदिन्दुकल्पं शरच्चन्द्रसदृशं पुत्रं असूत प्रसूतवती । यस्य पुत्रस्य उदयेन

ननेन इन्दुपक्षे आविर्भावेन सत्ववन्तः प्राणिनः । 'सत्त्वं प्राणे गुणेऽपि चे' ति वचनात् । समुद्रा इव सद्यः तत्क्षणं सन्तोषं समुद्रपक्षे वृद्धिं आपन् प्राप्ताः ॥ ॥ २५ ॥

पत्युस्समादिष्टमिदं विधाय
शेषं चिकीर्षुस्सुरकार्यमार्या ।
चराचराणां जगतां सवित्री
सा श्रद्दधे जन्मभुवं यशोदाम् ॥ २६ ॥

पत्युरिति ॥ चराचराणां स्थावरजङ्गमानां जगतां सवित्री सेयमार्या माया पत्युः समादिष्टं समादेशं भवेत्क्तः । विधाय कृत्वा शेषं अवशिष्टं सुराणां कार्यं चिकीर्षुः कर्तुमिच्छुः यशोदां जन्मभुवं आत्मनः जन्मभूमिं श्रद्दधे निश्चितवती ॥ ॥ २६ ॥

अथ प्रजानामभिवृद्धिकामो
देवो दयायाः किल जन्मभूमिः ।
स्वजन्मने जन्मविनाशहेतुः
प्राप्यस्सतां प्राप स देवकीं ताम् ॥२७॥

अथेति ॥ अथ अनन्तरं दयायाः कृपायाः जन्मभूमिः उत्पत्तिस्थानं किलेति प्रसिद्धौ । देवः 'दिवु क्रीडे' त्यादिना क्रीडाद्यर्थयुक्तः सः विष्णुः प्रजानां लोकवासिनां अभिवृद्धिकामः अभ्युदयमिच्छन् जन्मविनाशयोः हेतुः सतां सज्जनानां प्राप्योऽभिगम्यः स्वजन्मने आत्मजननाय तां देवकीं प्राप प्राप्तवान् ॥ ॥ २७ ॥

कृशावलग्ना कुचयोर्गरिम्णा
सा देवकी सन्नतगात्रयष्टिः ।

जगत्त्रयीपुण्यकृतावलम्बा
बभार गर्भेण जगन्निवासम् ॥ २८ ॥

कृशेति ॥ कुचयो गरिम्णा गुरुत्वेन सन्नता अवनता गात्रयष्टि श-रीर यस्या । कृशावलग्ना कृशमध्या । सा देवकी जगत्त्रयीपुण्येन लोकत्रय-वासिना सुकृतेन कर्तृणा कृतावलम्बा कृताश्रया सती गर्भेण जगन्निवास बभार धृतवती । तादृशोऽवलम्बो न चेत् कथमेन बिभृयादिति भाव ॥२८॥

अन्तर्दधाना सरसीरुहाक्षं
स्वेनावतारेण भुवं पुनाना ।
सा देवकी सा च कवेरकन्या
मिथोऽदधातामुपमानभावम् ॥ २९ ॥

अन्तरिति ॥ सरसीरुहाक्ष विष्णु अन्तरुदरे दधाना वहन्ती अन्यत्र रङ्गनाथ मध्यभागे दधानेत्यर्थ । स्वेन आत्मीयेन अवतारेण भुवि जननेन भुव पुनाना पावयन्ती अन्यत्र प्रवाहात्मनाऽऽविर्भावेन । सा तथा प्रसिद्धा देवकी सा कवेरकन्या कावेरा च मिथ अन्योन्य उपमानभाव औपम्य अ-दधाता धृतवत्यौ । देवक्या कावेर्युपमान कावेर्या देवकी चेत्यर्थ ॥ २९ ॥

अलं निवासाय न यस्य विश्वं
वसन् स गर्भे मुमुदे मुकुन्दः ।
परोपकारप्रभवं हि दुःखं
पुंसस्सुखायैव महत्तरस्य ॥ ३० ॥

अलमिति ॥ यस्य मुकुन्दस्य निवासाय वस्तु विश्व ब्रह्माण्डकटाह नाल न पर्याप्तम् । विश्वस्य तदुदरैकदेशमात्रगोचरत्वादिति भाव । स मु कुन्द गर्भे वसन् देवक्युदरे तिष्ठन्नपि मुमुदे जहर्ष। अर्थान्तरन्यासमाह—

महत्तरस्य लोकोत्तरस्य पुसः पुरुषस्य परोपकारात् भवतीति तादृशं दुःख क्लच्छ्रस्थिति सुखाय सन्तोषायैव भवति । हि यस्मात् तस्मात् इतीदमुपपन्नमेवेत्यर्थः ॥ ॥ ३० ॥

वहिस्स्फुरन्त्या करपाञ्चजन्य-
त्विषेव विष्णोरुदरस्थितस्य ।
अधत्त तस्यास्तपनीयवर्णा
मधूकपुष्पच्छविमङ्गयष्टिः ॥ ३१ ॥

बहिरिति ॥ तस्याः देवक्याः तपनीयवर्णा सुवर्णच्छविः अङ्गयष्टिः मधूकपुष्पस्य मधुद्रुमकुसुमस्य 'मधूके तु गुडपुष्पमधुद्रुमा वित्यमरः' । छविं शोभां पाण्डुच्छविमित्यर्थः । अधत्त दधार । अत्रोत्प्रेक्षते— उदरस्थितस्य विष्णोः बहिर्भागे स्फुरन्त्या प्रकाशमानया करगतस्य पाञ्चजन्यस्य त्विषा प्रभयेवेति । तस्याः पाण्डुवर्णत्वं उत्प्रेक्षाबीजम् ॥ ॥ ३१ ॥

बभार हारं कुचयोर्न तन्वी
न पादयोर्नूपुरमासुमोच ।
दधौ मणिं भारभिया न मौळौ
तदेव कैवल्यमभूषयत्ताम् ॥ ३२ ॥

बभारेति ॥ तन्वी देवकी भारात् भिया भयेन हेतुना कुचयोः हारं मुक्तागुणं न बभार न धृतवती । पादयोः नूपुरं मञ्जीरं नासुमोच न बबन्ध । मौळौ शिरसि मणिं चूडारत्नं च न दधौ न धारयामास । तत् कैवल्यमेव निरलङ्कारत्वमेव तां देवकीं अभूषयत् अलञ्चकार । तदुक्तं अलङ्कारनिराकरणे कर्पूरमञ्जर्यां 'दुःखायिते सा मुहुरङ्गिइसङ्कारात्र इति ॥ ३२ ॥

दृशः प्रयत्नेन दधौ तिरश्ची-
रुवाच मन्दं निभृतं जहास ।

शनैर्ययौ दत्तकरा सखीभिः
भृशं निशश्वास च तावदेव ॥ ३३ ॥

दृश इति ॥ सा देवकी दृशः कटाक्षान् प्रयत्नेन प्रयासेन तिरश्चीः दधौ तिर्यग्वर्तिनीः प्रहितवती। वामतः दक्षिणतश्चेत्यर्थः । मन्दं उवाच उक्तवती । निभृतं निःशब्दं जहास हसितवती । सखीभिः दत्तकरा कृतहस्तावलम्बा शनैः ययौ सञ्चचार। तावता तावन्मात्रप्रयासेनैव भृशं अत्यर्थं निशश्वास निश्वासं कृतवती । गर्भावसादोऽतिमहानिति भावः ॥ ३३ ॥

सहैव हर्षेण सुधाशनानां
सहैव पुण्येन वसुन्धरायाः ।
भयेन भोजाधिपतेश्च देवः
सहैव गर्भे ववृधे मुकुन्दः ॥ ३४ ॥

सहेति ॥ सुधाशनानां देवानां हर्षेण सहैव वसुन्धरायाः भूमेः पुण्येन तद्वासिनां सुकृतेन सहैव भोजाधिपतेः कंसस्य भयेन च सहैव देवः मुकुन्दः गर्भे देवकीजठरे ववृधे वृद्धिमगात् । हर्षादयोऽप्यासन्नित्यर्थः ॥ ३४ ॥

शिरोभिरूढेन वनस्पतीनां
फलोपहारेण निवेदितर्द्धिः ।
प्रावृट् समासादितसूतिकालां
तां देवकीं द्रष्टुमिवाजगाम ॥ ३५ ॥

अथ वर्षर्तु वर्णयति— शिरोभिरिति ॥ प्रावृट् वर्षकालः वनस्पतीनां वृक्षाणां शिरोभिः शाखाग्रैः ऊढेन धृतेन फलोपहारेण फलरूपेण प्राभृतेन निवेदितर्द्धिः ज्ञापितसम्पत् सती आजगाम प्राप्ता । अत्रोत्प्रेक्षते— समासादितः सम्यक् प्राप्तः सूतिकालः प्रसवसमयः यस्याः तां देवकीं

द्रष्टुमिवेति । समृद्धिमती स्त्री तावत् आसन्नप्रसवां स्वामिनीं प्राभृतेन उपजुषते । तादृगलोकव्यवहारः इह उत्प्रेक्ष्यते ॥ ॥ ३५ ॥

अथैकदेशा इव वारिराशेः
उच्चैः पुरोमारुतविप्रकीर्णाः ।
वृतास्तटिद्विद्रुमवल्लरीभिः
विरेजिरे व्योमनि वारिवाहाः ॥ ३६ ॥

अथेति ॥ उच्चैः ऊर्ध्वं प्रसृतैः पुरोमारुतैः पौरस्त्यवतैः विप्रकीर्णाः विक्षिप्ताः वारिवाहाः मेघाः व्योमनि अम्बरे विरेजिरे शुशुभिरे । अत्रोत्प्रेक्षते— तटिद्भिरेव विद्रुमवल्लरीभिः प्रवालल्लताभिः वृताः रेजिरे शुशुभिरे । वारिराशेः समुद्रस्य एकदेशाः एकभागाः इवेति । पुरो मरुत्प्रेरणं अस्याप्युपरिगमनहेतुः ॥ ॥ ३६ ॥

वलाहकव्रातभवैस्तमोभिः
दिनेषु दुर्बोधपुरस्थितेषु ।
न कश्चिदासीदभिसारिकाणां
विद्युत्प्रकाशेन विनाऽन्तरायः ॥ ३७ ॥

वलाहकेति ॥ वलाहकव्रातभवैः मेघवृन्दोद्भूतैः तमोभिः दुर्बोधं बोद्धुमशक्यं पुरःस्थितमपि वस्तु येषु तेषु । दिनेषु दिवसेषु अभिसारिकाणां कान्तं अभिसर्तुरीणा स्त्रीणाम् । 'कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिके'त्यमरः । विद्युत्प्रकाशेन विना विद्युत्प्रकाशं वर्जयित्वा कश्चित् अन्तरायः विघ्नः नासीत् । विद्युत्प्रकाशादृते अन्यः प्रत्यूहः नेत्यर्थः ॥ ३७ ॥

पयोदभस्त्रान्तरनिर्गतेन
झात्कारिणा चण्डसमीरणेन ।

वियोगिनां चेतसि मेघकालः
सन्धुक्षयामास मनोभवाग्निम् ॥ ३८ ॥

पयोदेति ॥ मेघकाल प्रावृट्काल वियोगिना विरहिणा चेतसि य मनोभवाग्नि कामाग्नि त पयोदानामेव भस्त्राणाम् । भस्त्रा चर्मनिर्मितमग्निसन्धुक्षणसाधनम् । अन्तरात् विवरात् निर्गतेन निस्सृतेन झात्कारिणा झादिति शब्दवता चण्डसमीरणेन चण्डानिलेन सन्धुक्षयामास ज्वलयामास ॥

स्मरेण लोकत्रितयेश्वरेण
सम्भाविताज्जीवितनिर्विशेषम् ।
ऋतोर्वसन्ताज्जलदागमस्य
जहार जातिर्निखिलं निकर्षम् ॥ ३९ ॥

स्मरेणेति ॥ जलदागमस्य मेघकालस्य लोकत्रितयस्य ईश्वरेण । तस्य तदधीनत्वात् । स्मरेण जीवितनिर्विशेष जीवितसदृश सम्भावितात् सम्यक् बहुमतात् वसन्तात् सुरभिसमयात् सकाशात् निकर्ष निर्गमभावम् । वसन्तात् अर्वाक्च तदितरर्तव इति न्यक्कारस्य विषयभूतत्वात् जात अवमान सर्व जाति मालतीलता जहार शमयाञ्चकार । निखिलसुरभिपुष्पोत्तमभूता जातिः तत्कालजन्ये अतिप्रावृट्काले अधिक बहुमानपात्र अभूदित्यर्थ । जातिमहत्त्वमेव इतरगुणेभ्य गरीयस्तरमिति च ध्वन्यते ॥ ॥ ३९ ॥

बलाद् गृहीता इव वैतसीभिः
शाखाभिरारूढमदा इवोच्चैः ।
परिस्खलन्त्यो निखिलास्तटिन्यः
जग्मुर्जवादुद्भटफेनहासाः ॥ ४० ॥

बलादिति ॥ निखिला तटिन्य नद्य वैतसीभि वेतससम्बन्धिनी-

भिः शाखाभिः विटपैः बलात् हठात् गृहीता अपि आरूढमदा इव आत्तगन्धा इव उच्चैः भृशं स्खलन्त्यः ग्रहणसम्भ्रमात् भूमिषु स्खलितपादचारं गच्छन्त्य इत्यर्थः । उद्भटः उद्रिक्तः फेन एव हासः यासान्ताः । तथा सद्यः जवात् शीघ्रं जग्मुः प्रसृताः । अत्र अनभिमतैः भटैः बलात् गृहीताना तान् अवधूय पलायमानाना समाधिः ॥ ॥ ४० ॥

उदारसौरभ्यवशीकृतानां
अन्वीयमानः पटलैरलीनाम् ।
अकल्पयत् केतकमातरिश्वा
मनोभवस्यापि मनोविकारम् ॥ ४१ ॥

उदारेति ॥ उदारेण उत्कृष्टेन सौरभ्येण वशीकृताना अधीनता नीताना अलीना भृङ्गाणां पटलैः समूहैः अन्वीयमानः अनुगम्यमानः केतकसम्बन्धी मातरिश्वा पवनः मनोभवस्य मन्मथस्यापि मनसः विकारं अकल्पयत् चकार । किं पुनः अन्येषामिति भावः ॥ ॥ ४१ ॥

अत्यम्बुपानप्रभवस्य कर्तु-
मन्तर्जडिम्नः प्रतिसंविधानम् ।
पपुस्तिरस्कारपदेन मेघाः
मयूखमालामरविन्दबन्धोः ॥ ४२ ॥

अतीति ॥ मेघाः अत्यम्बुपानप्रभवस्य अतिशयेन जलपानात् उद्भूतस्य अन्तर्जडिम्नः अन्तर्जाड्यस्य प्रतिसंविधानं प्रतिक्रियां कर्तुं अरविन्दबन्धोः सूर्यस्य मयूखमाला रश्मिमाला तिरस्कारपदेन तिरस्कार इति व्याजेन पपुः पिबन्तिस्म । तिरस्कारः निह्नवः तद्वाचकशब्देन पानमेवोच्यत इत्यर्थः । तदानीं सूर्यकिरणा क्वापि नादृश्यन्त इति तात्पर्यम् ॥ ४२ ॥

रराज खर्जूरफलप्रकाशं
नवं पयः काननपल्वलेषु ।
पयोदवृन्दैः परिपीय मुक्तं
प्रभाकरस्येव मरीचिजालम् ॥ ४३ ॥

रराजेति ॥ कानने यानि पल्वलानि अल्पसरांसि । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । तेषु खर्जूरस्य फलमिव प्रकाशः यस्य । पाटलवर्णमित्यर्थः । तादृशं नूतनं पयः जलं रराज शुशुभे । अत्रोत्प्रेक्षते— पयोदानां वृन्दैः परिपीय पीत्वा पुनः मुक्तं प्रभाकरस्य अर्कस्य । अर्थात् बालार्कस्य । मरीचिजालं रश्मिकदम्बमिवेति ॥ ॥ ४३ ॥

महीभृतां मूर्द्धसु दत्तपादं
विलोक्य मित्रं विहतप्रतापम् ।
मग्ने जले मर्तुमिवारविन्दे
मधुव्रताश्चुक्रुशुरन्तरिक्षे ॥ ४४ ॥

महीभृतामिति ॥ महीभृतां पर्वतानां राज्ञामिति च स्फुरति । मूर्धसु दत्तपादं निहितकिरणं निक्षिप्तचरणञ्च मित्रं सूर्यं सुहृदञ्च विहतप्रतापं विगतोष्माणं विगतपराक्रमञ्च विलोक्य मर्तुमिव शरीरं त्यक्तुमिव अरविन्दे पद्मे जले पयसि मग्ने अन्तर्हिते सति मधुव्रताः भृङ्गाः अन्तरिक्षे वियति स्थितेनेति शेषः । चुक्रुशुः झङ्कारं चक्रुः । अत्र राज्ञः विपत्तिमालोक्य मर्तुकामे तदुपजीविनि कस्मिंश्चित् तदुपजीविनामाक्रन्दः समासेनोच्यत इति समासोक्तिः ॥ ॥ ४४ ॥

निषेव्य हंसा मधुरैर्वचोभिः
पद्माकरं लब्धसमीहितार्थाः ।

सद्यो ययुस्तस्य विपत्तिकाले
जलाशयानां प्रकृतिः किलैषा ॥ ४५ ॥

निपेव्येति ॥ हंसा मधुरैः मनोहरैः वचोभिः नादैः पद्माकरं निषेव्य आहूत्य लब्धसमीहितार्थाः प्राप्तवाञ्छितकार्यार्थाः । बिसाङ्कुरभोजनादिनेत्यर्थः । तस्य पद्माकरस्य विपत्तिकाले सलिलावमज्जनसमये सद्यः तत्क्षणमेव ययुः मानसं सरः प्रति गताः । जलाशयानां मन्दबुद्धीनां प्रकृतिः स्वभावो एषा किल ईदृशीति प्रसिद्धम् । दुर्जना एव स्वार्थसाधकाः जनाः आपदि त्यजन्तीत्यर्थः । वस्तुतस्तु जलमाशयमाश्रयो येषां इति जलपक्षिणां प्रीतिः एषा । स्वानुभवक्षये ततो यान्तीति भावः ॥ ॥ ४५ ॥

प्ररूढसस्याः फलमूलशाकैः
निरन्तरास्स्वादुनवोदकाढ्याः ।
पल्लीजुषां चेतसि पामराणां
धृतिं परामादधिरे वनान्ताः ॥ ४३ ॥

प्ररूढेति ॥ प्ररूढानि कर्षणबीजवापादनपेक्ष्य स्वयमेव सरूढानि सस्यानि व्रीहियवमाषादीनि येषु । फलैः मूलैः शिग्रुपल्लवादिपत्रव्यञ्जनपदार्थैश्च निरन्तराः पूर्णाः । स्वादुभिः नवोदकैः नूतनजलैः आढ्याः समृद्धाः वनान्ताः वनप्रदेशाः पल्लीजुषां कुटीवासिनां पामराणां किरातनीचजातीनां परां अत्यर्थं धृतिं आदधिरे चक्रुः ॥ ॥ ४६ ॥

समुन्मिषन्ती गिरिमल्लिकानां
प्रसूनराजिस्सुतरां विरेजे ।
मुक्त्वा नभो मेघविमर्दभीत्या
नक्षत्रमालेव गता धरित्रीम् ॥ ४७ ॥

समुन्मिषन्तीति ॥ गिरिमल्लिकाना कुटजानाम् । 'कुटजो गिरिमल्लिके'त्यमरः । समुन्मिषन्ती सम्यग्विकसन्ती प्रसूनराजिः कुसुमपङ्क्तिः सुतरां भृशं विरेजे शुशुभे । अत्रोत्प्रेक्षा—मेघानां विमर्दात् सम्बन्धात् भीत्या भयेन नभः आकाशं मुक्त्वा त्यक्त्वा धरित्रीं गता भुवं प्राप्ता नक्षत्राणां माला राजिरिवेति ॥ ॥ ४७ ॥

धाराळजीमूतकृतान्धकारे
तस्मिन्नपर्यन्तजडिम्नि काले ।
अलक्ष्यमाणः क्वचिदंशुमाली
दिवाऽप्युवासेव तनूनपाति ॥ ४८ ॥

धाराळेति ॥ धाराळैः धारावद्भिः जीमूतैः मेघैः कृतोऽन्धकारो यस्मिन् तस्मिन् अपर्यन्तोऽनवधिः जडिमा जाड्यं यस्मिन् तादृशे काले क्वचित् कुत्रापि अलक्ष्यमाणः नलक्ष्यमाणः हेतुगर्भविशेषणम् । अलक्ष्यमाणत्वादित्यर्थः । अंशुमाली सूर्यः दिवाऽपि दिवसेऽपि तनूनपात्यग्नौ उवास स्थितवानिव । रात्रौ अग्नौ अवस्थानं प्रसिद्धमेव । तथा च रघुवंशे—'दिनान्ते निहितं तेजस्सवित्रेव हुताशन' इति । अत्र तु न केवलं तेजोनिधानं अपि तु स्वयमेव सूर्यः दिवानिशं अग्नौ निष्ठतीवेत्युत्प्रेक्षा ॥ ॥ ४८ ॥

इति प्रवृत्ते समये घनानां
मासे नभस्ये निशि मध्यमायाम् ।
गणे शुभाख्यायिनि च ग्रहाणां
देवक्युवाह प्रसवाभिमुख्यम् ॥ ४९ ॥

इतीति ॥ इत्युक्तप्रकारेण घनानां समये प्रावृषि प्रवृत्ते प्राप्ते सति नभस्ये प्रोष्ठपदे मासे मध्यमायां निशि अर्धरात्रे ग्रहाणां गणे सूर्यादीनां समूहे शुभं आख्यातुं आविष्कर्तुं शीलं येषां इति तथाभूते च देवकी प्रस-

त्रे आभिमुख्य आसन्नकालत्व उवाह धृतवती ॥ ॥ ४९ ॥

हरत्सु बाह्यं भुवनस्य तापं
प्रावृट्प्रसूतेषु वलाहकेषु ।
असूत तस्यान्तरतापशान्त्यै
कृष्णांबुवाहं कृपयेव देवी ॥ ५० ॥

हरत्स्विति ॥ प्रावृषा प्रसूतेषु जनितेषु वलाहकेषु मेघेषु भुवनस्य बाह्य बहिर्गत ताप सन्ताप हरत्सु अपनयत्सु सत्सु देवी देवकी कृष्णमेवाबुवाह असूत अजनयत् । अत्रोत्प्रेक्षा— तस्य भुवनस्य अन्तरे अन्तर्भागे मनसि उद्भूतस्य तापस्य दु खस्य शान्त्यै शमनार्थं कृपया कारुण्येन हेतुना असूतेवेति ॥ ॥ ५० ॥

दिशः प्रसेदुस्सह निम्नगाभिः
जहर्ष लोकेन सहाम्बुराशिः ।
जाते मुकुन्दे मुमुचुश्च सद्यः
भयेन देवास्सह पुष्पवृष्टिम् ॥ ५१ ॥

दिश इति ॥ मुकुन्दे जाते प्रादुर्भूते सति दिशः निम्नगाभिः नदीभिस्सह प्रसेदुः प्रसन्नाः । निम्नगानां प्रसन्नत्वं शुचिजलत्वम् । लोकेन जनेन सहाबुराशिः जहर्ष हृष्टः । अम्बुराशेः हर्ष- वृद्धिः । देवाः सद्यः तत्क्षण भयेन भीत्या कंसादिभ्यस्त्रासेन सह पुष्पवृष्टिं मुमुचुः मुक्तवन्तः । भयमपि त्यक्तवन्त इत्यर्थः ॥ ॥ ५१ ॥

मनोभिरामेण मधुव्रतानां
नादेन शंसन्निव दिष्टवृद्धिम् ।

चचार वायुस्सुमनोंशुकानि
सम्प्राप्य सम्प्राप्य महीरुहेभ्यः ॥ ५२ ॥

मन इति ॥ वायु मनोभिरामेण मनोहरण मधुव्रताना भृङ्गाणा ना
दन झङ्काररवेण दिष्टवृद्धिं देवक्या पुत्रसम्भवेन दिष्ट्या वर्द्धस्वेति । शास
न्निति हेतो शतृप्रत्यय । शसनाद्धेतोरित्येत्यर्थ । महीरुहेभ्य वृक्षेभ्य स
काशान् सुमनस पुष्पाण्येव अशुकानि सम्प्राप्य सम्प्राप्य लब्ध्वा वृक्षेभ्यः
पर्णपत्रमाहत्येनेत्यर्थ । चचार मन्दमवीजयत् ॥ ॥ ५२ ॥

व्यजृम्भत प्रस्फुटशङ्खनादः
तारेण गीतध्वनिना विमिश्रः ।
समश्नुवानः ककुभा मुखानि
दिवौकसां मङ्गलतूर्यघोषः ॥ ५३ ॥

व्यजृम्भतेति ॥ दिवौकसा देवाना मङ्गलार्थं य तूर्याणा दुन्दुभी-
ना घोष रव स प्रस्फुटशङ्खनाद प्रव्यक्तशङ्खध्वनि तारेण उच्चेन गीत-
ध्वनिना गानरवेण विमिश्र सकुल ककुभा दिशा मुखानि सम्यगश्नुवान
प्राप्नुवन् सन् व्यजृम्भत व्यवर्धत ॥ ॥ ५३ ॥

त्रपामपास्यन् विनयं विलुम्पन्
नीतिं निगृह्णन् भयमाशु भञ्जन् ।
शरीरिणामच्युतजन्मजन्मा
मोदो जजृम्भे मदनिर्विशेषः ॥ ५४ ॥

त्रपान ॥ शरीरिणा सुरनरादिप्राणिना अच्युतस्य जन्मन जननात् जन्म
समुद्भव यस्य तादृश भगवदवतारहेतो उद्भूत इत्यर्थ । मोद हर्ष मदेन
मद्यपानमदेन निर्विशेष सम जजृम्भे जृम्भित । तस्मादस्यैव चतुर्भि

विशेषणैः उपपादयति— त्रपा लज्जा अपास्यन् त्यजन् विनयं अन्तश्शमं विलुम्पन् विच्छिन्दन् नीतिं नय निगृह्णन् निर्मूलयन् भय भीतिं आशु भञ्जन् निराकुर्वन्निति । सर्वत्र हेतौ शतृः । त्रपात्यागात् । उभयत्र समानः ॥

आपादिनं पाणिमुदस्य दूरं
ब्रह्मर्षिलोकः पतदुत्तरीयः ।
ननर्त पर्याकुलपादचारः
प्रहस्यमानस्सुरसुन्दरीभिः ॥ ५५ ॥

तदेव प्रपञ्चयति— आपादिनमिति ॥ ब्रह्मर्षीणा वसिष्ठादीना लोकः समूह आपादः दण्डः तद्वन्त 'पालाशो दण्ड आषाढ'इत्यमरः । पाणिं दूर उच्चैः उदस्य उत्क्षिप्य पतदुत्तरीयः प्रभ्रश्यदुपरिवस्त्र पर्याकुलपादचारः परिस्खलितपदविन्यासः ताळादिविकलत्वात् अक्रमनिक्षिप्तपादः अत एव सुरसुन्दरीभिः अप्सरोभि प्रहस्यमानः तथा सन् ननर्त नृत्त चकार ॥ ५५ ॥

शृङ्गोज्झितैः कुङ्कुमवारिपूरैः
अन्योन्यमभ्युक्षणतत्पराणाम् ।
प्रमोदजन्मा दिवि सम्बभूव
कोलाहलः कोऽपि सुधाशनानाम् ॥५६॥

शृङ्गेति ॥ शृङ्गैः उज्झितैः उत्क्षिप्तैः कुकुममिश्रितैः वारिपूरैः जलसमूहैः अन्योन्य इतरेतर अभ्युक्षणे मार्जने तत्पराणा प्रवृत्ताना सुधाशनानां इन्द्रादिदेवाना दिवि स्वर्गे प्रमोदात् हर्षात् जन्म उद्भवः यस्य तादृशः कोऽप्यनिर्वचनीयः कोलाहलः उत्सव इति यावत् । सम्बभूव सम्भूतः ॥ ५६ ॥

पितॄंश्च पुत्राः पितरश्च पुत्रान्
गुरूंश्च शिष्या गुरवश्च शिष्यान् ।

पतीश्च दाराः पतयश्च दारान्
प्रमोदमत्तास्सिषिचुः पयोभिः ॥ ५७ ॥

पितॄनिति ॥ अस्मिन् श्लोके तु पुत्रादय पित्रादीन् प्रमोदेन मत्ता मद प्रापितास्सन्त पयोभि सिषिचु सेचितवन्त ॥ ॥ ५७ ॥

असिञ्चदम्भोरुहयोनिरिन्द्रं
तं पङ्कजावासमसिञ्चदिन्द्रः ।
असिञ्चतां द्वौ विबुधानशेषान्
सर्वे सुरास्तौ च बलादसिञ्चन् ॥ ५८ ॥

असिञ्चदिति ॥ अम्भोरुहयोनि ब्रह्मा इन्द्र असिञ्चत् जलेनाभ्युक्षितवान् । स च एनमिति वक्तव्यमित्याह प्रपञ्चार्थम् । पङ्कजावास त पङ्कजे स्थितमेव । अतोऽभ्युक्षणेऽवस्थितेऽपि ब्रह्मण दुस्थितत्व सूचितम् । तौ ब्रह्मेन्द्रौ अशेषान् सर्वान् विबुधान् असिञ्चताम् सिक्तवन्तौ । ते चैतानिति सिद्धे सर्वत्र प्रपञ्चार्थम् । अस्मिन् पूर्वश्लोके ह्यातिशयादेव गुरुशिष्यलस्वामिभृत्यत्वादि सर्व विस्मृतमिति व्यज्यते ॥ ॥ ५८ ॥

मिथः पयोभिस्सिषिचुर्विनेदुः
ववल्गुरुच्चिक्षिपुरम्बराणि ।
अन्योन्यमंसेन मुहुर्मुहुः
मत्ता इव स्वर्गसदो बभूवुः ॥ ५९ ॥

मिथ इति ॥ स्वर्गे स [illegible] स्वर्गसद देवा मत्ता क्षीबा इव बभूवु । मदम [illegible] ह— पयोभि मिथ अन्योन्य सिषिचु सिक्तवन्त । विनेदु नाद चक्रु । ववल्गु ज[illegible]पु । इत्या अम्बराणि वसनानि उच्चिक्षिपु ऊर्ध्व अन्यथ क्षिप्तवन्त । अ[illegible]न्य अंसेन स्कन्धेन मुहुर्मुहु दीर्घमध्वान धृत्वा सचेरीत्यर्थ ॥ ॥ ५९ ॥

त्रिलोकनाथोदयसम्भवेन
मोदेन पर्याकुलमानसानाम् ।
गीते च नृत्ते च सुराङ्गनानां
बभूव ताळस्खलितं न दोषः ॥ ६० ॥

त्रिलोकनाथेति ॥ त्रिलोकनाथस्य विष्णो उदयात् उद्भवात् सम्भव उत्पत्ति यस्य तादृशेन मोदेन हर्षेण हेतुना पर्याकुल परवश मानस यासा सुराङ्गनाना गीते गाने नृत्ते नर्तने च ताळस्य स्खलित भ्रश दोष न बभूव दोषत्वेन नाभूत् ॥ ॥ ६० ॥

शृङ्गोदकास्फालनरक्तनेत्राः
विच्छिन्नहाराश्च्युतकर्णभूषाः ।
प्रहाससीदद्ध्वनिभिर्वचोभिः
समालपन्तो विबुधा विजह्रुः ॥ ६१ ॥

शृङ्गेति ॥ शृङ्गोदके यदास्फालन प्रहार तेन हेतुना रक्ते नेत्रे येषा ते । विच्छिन्ना हारा मौक्तिकस्रज येषाम् । च्युतकर्णभूषा गळित-कर्णाभरणा विबुधा देवा प्रहासेन उच्चहासेन सीदन्त क्षीणशक्तित्वात् अस्पष्टा ध्वनय येषा ते वचोभि समालपन्त सम्भाषमाणास्सन्त विजह्रु क्रीडितवन्त ॥ ॥ ६१ ॥

जाते हरौ दैत्यविमर्दनेन
विश्वम्भराभारमपाचिकीर्षौ ।
मुनेः प्रहर्षः कलहप्रियस्य
जगत्प्रहर्षश्च समावभूताम् ॥ ६२ ॥

जात इति ॥ दैत्यानां असुराणां विमर्दनेन विमथनेन कारणेन विश्वम्भरायाः भूमेः भारं अपाचिकीर्षौ निराकर्तुमिच्छौ हरौ विष्णौ जाते अवतीर्णे सति कलहप्रियस्य मुनेः नारदस्य प्रहर्षः प्रमोदः जगतां जगत्त्रयवासिनां प्रहर्षश्च समो तुल्यावभूताम् । अत्र कारणदृष्ट्या नारदस्य कार्यदृष्ट्या जगतश्च प्रहर्ष इति द्रष्टव्यम् ॥ ॥ ६२ ॥

इति प्रहर्षाकुलितैर्मनोभिः
विशृङ्खलं क्रीडति देहिवर्गे ।
कंसस्सभृत्यः प्रतिपद्य मूर्छां
निद्राभिधानां न किमप्यबोधि ॥ ६३ ॥

इतीति ॥ इति एवंप्रकारेण देहिनां वर्गे गणे प्रहर्षेण आकुलितैः परवशीकृतैः मनोभिः विशृङ्खलं अविघ्नं यथा तथा क्रीडति सति सभृत्यः भृत्यैस्सहितः कंसः निद्रेत्यभिधानं यस्यास्सा तां मूर्छां मोहं प्रतिपद्य प्राप्य किमपि नाबोधि न बोधितवान् ॥ ॥ ६३ ॥

श्यामं चतुर्बाहुमुदारहारं
किरीटिनं कुण्डलदीप्तगण्डम् ।
पिताऽपि माता च विलोक्य पुत्रं
आनन्दमग्नौ विवशावभूताम् ॥ ६४ ॥

श्याममिति ॥ पिता वसुदेवश्च माता देवकी च श्यामं श्यामलवर्णं चतुर्बाहुं चतुर्भुजं उदारहारं उत्कृष्टमुक्तागुणालङ्कृतं किरीटिनं कुण्डलाभ्यां मकरकुण्डलाभ्यां दीप्तौ गण्डौ कपोलौ यस्य तादृशं पुत्रं कुमारं विलोक्य आनन्दे हर्षाम्बुधौ मग्नौ विवशौ अस्वस्थावभूताम् । भगवद्दर्शनेन आनन्दपरवशौ बभूवतुः ॥ ॥ ६४ ॥

नियम्य हर्षोदयपारवश्यं
तं देवकीजानिरुवाच वाचम् ।
प्रसीद भीतोऽहमतीव कंसात्
इदं तु रूपं प्रतिसंहरेति ॥ ६५ ॥

नियम्येति ॥ देवकी जाया यस्य देवकीजानिः वसुदेवः हर्षोदयेन प्रमोदोद्भवेन यत् पारवश्यं परवशता तत् नियम्य निगृह्य भगवन्तं प्रति हे भगवन् प्रसीद प्रसादं कुरु । अहं कंसात् सकाशात् अतीव अत्यर्थं भीतः त्रस्तः भवामीति शेषः । इदं दृश्यमानं रूपं विष्णुस्वरूपं प्रतिसंहर परित्यज । इति एवंप्रकारं वाचं उवाच उक्तवान् ॥ ॥ ६९ ॥

तत्प्रेरितस्तल्पगतं कराभ्यां
तमाददे कल्पितबालभावम् ।
तयोश्शयानः करयोस्स तस्य
प्रकाममप्रीयत पद्मनाभः ॥ ६६ ॥

तदिति ॥ कल्पितबालभावं प्राप्तकिशोरभावं तल्पगतं पर्यङ्कशायिनं विष्णुं तत्प्रेरितः तेन विष्णुना प्रेरितः नियुक्तः स वसुदेवः कराभ्यां आददे गृहीतवान् । पद्मनाभः वैकुण्ठः तस्य वसुदेवस्य तयोः तादृगुद्धानक-शयोः करयोः करतलयोः शयानः प्रकामं अधिकं अप्रीयत प्रीतो बभूव । पूर्वं अतिविशालशेषशयने शयानस्य विश्वम्भरस्य तथा सङ्कुचितस्थानशयनमपि प्रीतिकरमित्याश्चर्यमेतदिति ॥ ॥ ६६ ॥

अशेत यः प्राग्वटपत्रमध्ये
लोकानशेषानुदरे दधानः ।

विना तपोभिः किमु तस्य सिध्येत्
तत्पाणियुग्मे शयनं मुरारेः ॥ ६७॥

अथ वसुदेवस्य भाग्यातिशयं प्रशंसन्नाह—अशेतेति ॥ यः मुरारिः प्राक् पूर्वं प्रळयकाले अशेषान् लोकान् सर्वभुवनानि उदरे दधानः धारयन् वटपत्रस्य न्यग्रोधपत्रस्य मध्ये अशेत शयितवान् । तस्य मुरारेः तत्पाणियुग्मे तस्य वसुदेवस्य पाणियुग्मे शयनं कर्म तपोभिः विना जन्मान्तरकृते बहुभिः तपोभिः विना सिध्येत् किमु कथं सिध्यति । तपसा विना न सिध्येदित्यर्थः ॥ ॥ ६७ ॥

तमालनीलेन तमोभरेण
निपीडिताशावलये निशीथे ।
आदाय पङ्केरुहलोचनं तं
सद्यस्स निर्गत्य गृहात् प्रतस्थे ॥ ६८॥

तमालेति ॥ स वसुदेवः तमालवत् तापिञ्छवत् नीलेन तमोभरेण तमस्समूहेन निपीडितं निरुद्धं आशावलयं दिक्चक्रं यस्मिन् तस्मिन् निशीथे अर्धरात्रे पङ्केरुहलोचनं विशाललोचनत्वात् मनोभिरामं तं कृष्णं आदाय गृहीत्वा सद्यः तत्क्षणे गृहात् निर्गत्य भवनाद्बहिः अवतीर्य प्रतस्थे प्रस्थितवान् ॥ ॥ ६८ ॥

निवार्य वर्षोदकमात्मनैव
प्रकाश्य मार्गं फणरत्नभासा ।
उपायमुक्त्वा वसुदेवकर्णे
शेषस्सिषेवे बहुधैव विष्णुम् ॥ ६९ ॥

निवार्येति ॥ शेषः अनन्तः वर्षोदकं वर्षजलं आत्मना स्वशरीरेण

निगार्य निरुध्य फणरत्नाना भमा दीप्त्या मार्ग प्रकाश्य वसुदेवस्य कर्णे उ-पाय एवकर्तव्यमिति कार्यशरीरमुक्त्वा । अतिरहस्यत्वात् कर्णे कथनमिति द्रष्टव्यम् । बहुधा बहुप्रकारेण विष्णु मिषेवे सेवितवान् । वर्षवारणमार्गप्रदर्शनोपायकथनादि सर्वं विष्णुसेवनमित्याशयः ॥ ॥ ६९ ॥

पुरात् स निर्गत्य पुमांसमाद्यं
वहन् वहन्तीं यमुनामपश्यत् ।
कूलङ्कषौघाऽपि कलिन्दकन्या
तदीयगुल्फद्वयसोदकाऽभूत् ॥ ७० ॥

पुरादिति ॥ आद्य पुमासं वहन् धारयन् स वसुदेवः पुरात् निर्गत्य निर्याय वहन्तीं प्रवहन्तीं यमुना कालिन्दीं अपश्यत् दृष्टवान् । कलिन्दकन्या कूलङ्कषौघाऽपि तीरातिक्रान्तप्रवाहाऽपि तदीयगुल्फद्वयसोदका वसुदेवगुल्फप्रमाणमुदकं यस्याः तथाऽभूत् ॥ ॥ ७० ॥

उत्तीर्य तां तत्तटसंश्रितानां
दातुं करं वार्षिकमागतानाम् ।
व्रजौकसां नन्दपुरोगमानां
प्रीतो निवेशं सहसा विवेश ॥ ७१ ॥

उत्तीर्येति ॥ ता यमुना उत्तीर्य उल्लङ्घ्य सः वसुदेवः वार्षिकं वर्षे भवं करं बलिं दातुं कंसायार्पयितुं आगताना मधुरापुरं प्रत्यागच्छतां तस्याः यमुनायाः तटं आश्रिताना सम्यक् पटकुटीबन्धेन आस्थिताना नन्दः पुरोगमः प्रधानभूतः येषां तेषां व्रजौकसां घोषवासिनां निवेशं स्कन्धावारं प्रीतः सन्तुष्टस्सन् सहसा विवेश प्रविष्टवान् ॥ ॥ ७१ ॥

प्रविश्य जानन्निव नन्दगोप
निवेशनं सुप्तशरीरिवर्गम् ।

सुतां प्रसूय प्रतिपन्ननिद्रां
दद‍र्श तद्धर्मवधूं यशोदाम् ॥ ७२ ॥

प्रविश्येति ॥ सः वसुदेवः सुप्तः निद्रा प्राप्तः शरीरिवर्गः देहिसमूहः यस्मिन् तत् । नन्दगोपस्य निवेशन निलय जानन्निव तत्र परिचित इव प्रविश्य दैवात् अन्वेषण विनैवासाद्येत्यर्थः । सुता प्रसूय प्रतिपन्ननिद्रा प्राप्तनिद्रा तस्य नन्दगोपस्य धर्मवधू धर्मपत्नीं यशोदा ददर्श दृष्टवान् ॥७२॥

तं शाययित्वा शयने तदीये
कन्यां समादाय निपत्य गच्छन् ।
शुश्राव पुत्रोदयहर्षमूलं
कोलाहलं गोपवधूजनानाम् ॥ ७३ ॥

तमिति ॥ स वसुदेवः तदीये तस्याः यशोदायाः सम्बन्धिनि शयने तल्पे तं बाल शाययित्वा शयित कृत्वा कन्या यशोदापुत्रीं आदाय गृहीत्वा निपत्य गच्छन् सन् पुत्रोदयेन पुत्रजननेन यः हर्षः तन्मूल तद्धेतुक गोपवधूजनाना कोलाहल आनन्दकळकळ शुश्राव श्रुतवान् ॥ ॥ ७३ ॥

करेण कन्यां मनसा च पुत्रं
वहन् मुहूर्तेन विलङ्घ्य मार्गम् ।
विशङ्कमाविश्य गृहं गृहिण्याः
निधाय बालां शयने स तस्थौ ॥७४॥

करेणेति ॥ सः वसुदेवः करेण कन्या पुत्रीं मनसा पुत्रञ्च वहन् पुत्रमेव चिन्तयन्नित्यर्थः । मुहूर्तेन वेगेन मार्गं विलङ्घ्य अतिक्रम्य गृहिण्याः देवक्याः गृह विशङ्कं आविश्य प्रविश्य रात्रावेव तत्रागमन शङ्काभावहेतुः । बाला कन्या शयने पर्यङ्के निधाय स्थापयित्वा तस्थौ स्थितवान् ॥ ॥ ७४ ॥

सा चञ्चरीकस्वनसन्निभेन
नादेन लोकस्य मनो हरन्ती ।
रुरोद किञ्चिद्विवृतेन बाला
स्फुटत्पयोजाकृतिना मुखेन ॥ ७५ ॥

सेति ॥ बाला कन्या चञ्चरीकस्य भृङ्गस्य स्वनेन नादेन सन्निभेन सदृशेन नादेन करणेन लोकस्य जनस्य मनोहरन्ती हृदयमाकर्षन्ती सती किञ्चिद्विवृतेन अत एव स्फुटत्पयोजाकृतिना विकसत्पङ्कजाकारेण मुखेन रुरोद रुदितवती ॥ ॥ ७५ ॥

आकर्ण्य बालध्वनिमस्तनिद्राः
प्रधाव्य रक्षापुरुषा जवेन ।
प्रबोध्य यत्नेन पतिं पृथिव्याः
शशंसुरस्मै भगिनीं प्रसूताम् ॥ ७६ ॥

आकर्ण्येति ॥ बालध्वनिं शिशुक्रन्दितं आकर्ण्य अस्तनिद्रा विगतनिद्रा रक्षापुरुषा रक्षार्थनियुक्ता भटा जवेन क्षिप्रं प्रधाव्य पृथिव्या पतिं कंसं यत्नेन कथञ्चित् प्रबोध्य प्रबोधं गमयित्वा अस्मै कंसाय भगिनीं देवकीं प्रसूतां प्राप्तप्रसवां शशंसुः न्यवेदयन् ॥ ॥ ७६ ॥

सद्यस्समागत्य स तत्र दृष्ट्वा
बालाममर्षेण विमर्शशून्यः ।
स्वस्रा निषिद्धोऽपि वधाभिलाषी
जग्राह तस्याश्चरणौ कराभ्याम् ॥ ७७ ॥

सद्य इति ॥ स कंसः सद्यः तत्क्षणं समागत्य तत्र सूतिकागृहे बाला

कन्यां दृष्ट्वा अमर्षेण कोपेन हेतुना विमर्शशून्यः निर्विचारस्सन् स्वस्रा भगिन्या निषिद्धोऽपि कन्यकेयमेना मावधीरिति वारितोऽपि वधाभिलाषी निग्रहेच्छुस्सन् कराभ्यां तस्याः बालायाः चरणौ जग्राह गृहीतवान् ॥ ७७ ॥

उदस्य दूरं तरसा करेण
 चिक्षेप तां दुर्मतिरश्मपृष्ठे ।
महीमयातैव दिवि स्थिता सा
 जज्वाल धाम्ना जगतां सवित्री ॥ ७८ ॥

उदस्येति ॥ दुर्मतिः दुर्बुद्धिः सः कंसः तां कन्यां करेण दूरं अत्यर्थं उदस्य उत्क्षिप्य अश्मपृष्ठे शिलोपरि चिक्षेप क्षिप्तवान् । जगतां सवित्री लोकमाता सा माया महीं भूमिं अयातैव अप्राप्तैव दिवि व्योम्नि स्थिता सती धाम्ना स्वरूपेण जज्वाल दीप्ता बभूव ॥ ७८ ॥

ततः करैस्तामरसप्रकाशैः
 सा मन्दमान्दोलितशस्त्रजाला ।
विलोक्य तं विह्वलचित्तवृत्तिं
 जगाद वाचं जगदेकमाता ॥ ७९ ॥

तत इति ॥ ततः अनन्तरं जगतां एकमाता मुख्यजननी सा माया तामरसप्रकाशैः पद्मसदृशैः करैः मन्दं यथा तथा आन्दोलितं आधूतं शस्त्रजालं शूलासिशरचापाद्यायुधसमूहः यया सा तथा सती विह्वलचित्तवृत्तिं विवशहृदयं तं कंसं विलोक्य वाचं वक्ष्यमाणप्रकारां जगाद उक्तवती ॥

त्वमग्रहीर्मच्चरणौ रुषाऽपि
 प्रायः फलं तस्य न हन्मि यत्त्वाम् ।

जातः पृथिव्यां तव जाल्म हन्ता
सद्यो हितं चिन्तय साधयामि ॥ ८० ॥

त्वमिति ॥ हे जाल्म असमीक्ष्यकारिन् । 'जाल्मोऽसमीक्ष्यकारी स्या'दित्यमर । अविवेकीत्यर्थ । रुषा रोषेण हेतुनाऽपि त्वं मच्चरणौ मम पादौ अग्रही गृहीतवानसि । त्वं मत्पादग्रहणस्य फलं प्राप्तः प्राप्तवाननु । किं फलमिति चेच्छृणु । यद्यस्मात् मत्पादावलम्बनाद्धेतो त्वां न हन्मि न हनिष्यामि । वर्तमानसामीप्यात् वर्तमानवन्निर्देश । तत्फलमिति भाव । तर्ह्यक्षतोऽहमिति नाश्वासकाल इत्याह— तव हन्ता हिंसक पृथिव्यां भूमौ कचित् जात उद्भूत । सद्य इदानीमेव पश्य यत् तत् चिन्तय विचारय । अहं साधयामि गच्छामि ॥　　　　॥ ८० ॥

इति नृपमभिधाय ज्योतिषा कुर्वती सा
तटिदिव नयनानि प्राणिनामाकुलानि ।
सुरयुवतिभिरुच्चैर्गीयमानापदाना
सुरपदमभिपेदे पाटिताभ्रा जवेन ॥ ८१ ॥

इतीति ॥ इति एवंप्रकारं नृपं कंसम् अभिधाय उक्त्वा सा कात्यायनी ज्योतिषा तेजसा तटिदिव विद्युदिव प्राणिनां देहिनां नयनानि लोचनानि आकुलानि अस्वस्थानि कुर्वती सुरयुवतिभिः अप्सरोभिः उच्चैः तारनादं गीयमानम् अपदानं पराक्रमः यस्याः तादृशा जवेन पाटिताभ्रा विदलितमेघपङ्क्तिस्सती सुरपदं स्वर्गलोकम् अभिपेदे आभिमुख्येन गतवतीत्यर्थ ॥　　　　॥ ८१ ॥

श्रुत्वा तस्याश्श्रवणपरुषां वाचमन्तर्विषण्णः
पुत्रापायव्यथितमनसं सान्त्वयित्वा स्वसारम् ।

पद्भ्यामेव स्वभवनमथ प्राप्य कृच्छ्रादनैषीत्
कंसश्चिन्ताकुलितहृदयो जाग्रदेव त्रियामाम् ॥

इति सुकुमारकृतौ कृष्णविलासकाव्ये
द्वितीयसर्ग ॥

श्रुत्वेति ॥ तस्या कात्यायन्या श्रवणयो परुषा असह्या वाच 'आ॰ त पुत्रिव्या तन जात्म हन्ते त्येवरूपा वाच श्रुत्वा अन्त मनसि विषण्ण विषादयुक्त कस पुत्राणा अपायेन विनाशेन व्यथित पीडित मन यस्या ता भगिनीं सान्त्वयित्वा सामगिरा आश्वास्य अथ अनन्तर पद्भ्यामेव पादसञ्चारेणैव न तु वाहनादिना स्वभवन आत्मीयभवन प्राप्य चिन्तया आत्मनि विचारेण आकुलित अवशीकृत हृदय यस्य तथाभूतस्सन् जाग्रदेव जाग्रदवस्थ एव त्रियामा रात्रिं कृच्छ्रात् प्रयत्नेन अनैषीत् नीतवान् ॥ ॥ ८२ ॥

इति श्रीरामपाणिवादविरचिताया विलासिन्याख्याया
श्रीकृष्णविलासव्याख्याया
द्वितीयस्सर्ग ॥

---



॥ श्रीरस्तु ॥

# ॥ अथ तृतीयः सर्गः ॥



**प्रातः प्रलम्बप्रमुखानमात्यान्**
**सर्वान् समाहूय स भोजराजः ।**
**सविभ्रमप्रेरितदृष्टिदत्ते**
**स्थाने निषण्णानवदद्विनीतः ॥ १ ॥**

अथ अङ्कावतारन्यायेन कंसोपक्रममेव कविरुपन्यस्यति प्रातरित्यादिना— प्रात प्रभातसमय एव । अनेन प्रस्तुतस्य त्वरोक्ता । स तथा विषण्णहृदय भोजराज कस प्रलम्बप्रमुखान् प्रलम्बारिष्टकेशिधेनुकादीन् अमात्यान् सचिवान् सर्वान् समस्तान् । न तु द्वित्रान् । अनेन कार्यगुरुत्व दर्शितम् । समाहूय सम्यक् बहुमानपूर्वकमाहूय सविभ्रम सविलास यथा तथा प्रेरितया प्रवर्तितया दृष्ट्या दत्ते कल्पिते स्थाने प्रदेशे निषण्णान् प्राधान्यानुरूप्यसुपविष्टान् । तानिति शेष । विनीत विनयसम्पन्नस्सन् अवदत् उक्तवान् ॥ ॥ १ ॥

**सन्दिह्य मोहाद्वसुदेववाक्यं**
**मया प्रमाणीकृतभूतवाचा ।**
**हता नृशंसेन सुता भगिन्याः**
**तेनाविलं मे हृदयं यशोऽपि ॥ २ ॥**

तमेवोक्तिप्रकारमाह— सन्दिह्येति ॥ प्रमाणीकृता कारणत्वेनाङ्गीकृता भूतवाक् अशरीरवाणी येन तेन नृशंसेन पापेन लोकापवाददविषयभू-

तेनेति यावत् । मया वसुदेवस्य वाक्यं 'अलं तयानेन वधोद्यमेने'ति, 'सर्वाण्यपत्यानी'त्यन्तर्भूता वाणी मोहात् अज्ञानात् सन्दिह्य भगिन्यास्सुताः षट् हताः हिंसिताः । तेन हेतुना अविश्वस्य मे हृदयं मनः यशः कीर्तिरपि आविलं कलुषम् । उभयमपि अप्रकाशमभूदित्यर्थः ॥ ॥ २ ॥

जातां पुनः काञ्चन काञ्चनाभां
सुतां गतायुर्निशि हन्तुमैच्छम् ।
उत्प्लुत्य सा व्योम्नि जवादतिष्ठत्
शस्त्रोत्कटा दर्शितदिव्यरूपा ॥ ३ ॥

जातामिति ॥ पुनः जातां षट्पुत्रनिधनादुत्पन्नां काञ्चनाभां काञ्चनप्रभां काञ्चन ईदृशीति वक्तुमशक्यां महाप्रभावामिति यावत् । सुतां स्वसुः पुत्रीं गतायुरहं आसन्नमृत्युत्वादेवेत्यर्थः । गतायामिति पाठे गतायां अतीतायां निशि रात्रौ हन्तुमैच्छं प्रारब्धवानभूवमित्यर्थः । सा दर्शितदिव्यरूपा प्रकाशितदिव्याकृतिः उत्प्लुत्य मत्करात् भ्रंशित्वा उद्गम्य शस्त्रैः नानारूपैः आयुधैः उत्कटा भीषणा जवात् क्षिप्रं व्योम्नि गगने अतिष्ठत् स्थितवती ॥ ॥ ३ ॥

नियम्य सा मातुल इत्यमर्षं
प्रसेदुषी मामवदच्च बाला ।
अरिर्महीयानजनिष्ट भूमौ
तवोचितं सम्प्रति चिन्तयेति ॥ ४ ॥

नियम्येति ॥ सा अत्र प्रस्तुता बाला मातुल इति मातृसहोदर इति कृत्वा अमर्षं कोपं नियम्य निगृह्य प्रसेदुषी प्रसन्ना सती मां अवदच्च उक्तवती च । भूमौ तव महीयान् उत्कृष्टः अरिः शत्रुः अजनिष्ट जातः । सम्प्रति इदानीं उचितं योग्यं यत् तत् चिन्तय विचारयेत्यवददिति सम्बन्धः ॥ ४ ॥

व्याहृत्य मां द्यां प्रति देवनारी-
गणैर्गतायामिति सेवितायाम् ।
देव्यामहं दुश्चरितं स्वमेव
स्मरन् विनिद्रो रजनीमनैषम् ॥ ५ ॥

व्याहृत्येति ॥ इति एवंप्रकारं मां प्रति व्याहृत्य उक्त्वा देवनारीगणैः अप्सरोगणैः सेवितायां तस्यां देव्यां द्यां स्वर्गं प्रति गतायां सत्याम् अहं स्वं मत्सम्बन्धि दुश्चरितं दुर्व्यापारं भगिनीपुत्रनवध्यमकृत्यमित्यर्थः । स्मरन् चिन्तयन्नेन विनिद्रः निद्रारहितः रजनीं रात्रिशेषं अनैषं अनयम् ॥ ५ ॥

युद्धेषु देवाः पुरुहूतमुख्याः
भग्ना मया स्थातुमशक्नुवन्तः ।
अश्वान् परित्यज्य विमुच्य नागान्
मुक्त्वा च शस्त्राणि दिशो द्रवन्ति ॥६॥

युद्धेष्विति ॥ युद्धेषु सङ्ग्रामेषु मया भग्नाः पराजिताः पुरुहूतमुख्याः इन्द्रादयः देवाः स्थातुं स्वस्थाने वर्तितुं अशक्नुवन्तः असमर्थास्सन्तः अश्वान् परित्यज्य उपेक्ष्य नागान् गजान् विमुच्य त्यक्त्वा शस्त्राणि आयुधानि च मुक्त्वा उज्झित्वा दिशः देशान्तराणि प्रति द्रवन्ति धावन्ति । इदानीमपि तथा दृश्यन्त इति वर्तमाननिर्देशः ॥ ॥ ६ ॥

तदेषु नैकोऽपि भुवं गतो मे
शक्नोति कर्तुं प्रतिकूलभावम् ।
महीयसः किं घटते परागः
समीरणस्याभिमुखं प्रसक्तुम् ॥ ७ ॥

तदिति ॥ तत् तस्माद्धेतो एषु देवेषु मध्ये एकोऽपि भुवगत भूलोक प्राप्त मे प्रतिकूलभाव प्रतिपक्षत्व कर्तुं न शक्नोति न समर्थो भवति । पराग भूरेणु महीयसोऽतिमहत समीरणस्य वायो अभिमुख यथा भवति तथा प्रसक्तु प्राप्तु किं घटते किं चेष्टते । न शक्तो भवेदित्यर्थ । अत्र देवपरागयोश्च प्राकरणिकाप्राकरणिकयो बिम्बप्रतिबिम्बभावात् दृष्टान्तोऽलङ्कार । तदुक्तम्— 'चेद्बिम्बप्रतिबिम्बत्व दृष्टान्तस्तदलङ्कृति'रिति ॥७॥

**किमन्यदार्ताभ्यवपत्तिकामः**
**सुरेषु सन्दर्शितपक्षपातः ।**
**अजायतोर्व्यामसुरान्निहन्तुं**
**स एव मन्ये सरसीरुहाक्षः ॥ ८ ॥**

किमिति ॥ स तादृक्प्रभाव सरसीरुहाक्ष विष्णुरेव आर्ताना दुःखिताना अभ्यवपत्तौ अनुग्रहे काम अभिलाष यस्य स । 'अभ्यवपत्तिरनुग्रह'इत्यमर । सुरेषु देवेषु सन्दर्शित प्रकाशित पक्षपात स्नेह येन तथाभूतस्सन् असुरान् निहन्तु असुरनिग्रहार्थं उर्व्या अजायत जात इति मन्ये । किमन्यत् अन्यत् किमपि तदेवेत्यर्थ । अयमेव हि देवीवचनेऽभिप्राय इति भाव ॥ ॥ ८ ॥

**सर्वे वयं दैत्यकुलप्रसूताः**
**केनापि जाता भुवि कारणेन ।**
**स तेन सन्नह्यति जेतुमस्मान्**
**उक्तोऽयमथः किल नारदेन ॥ ९ ॥**

अस्तु स तावत् असुरान् निहन्तु किमस्माक ततो हानिरिति चेत् अत्राह— सर्वे इति ॥ वय अस्मदादय सर्वे दैत्यकुले असुरकुले प्रसूता उद्भूता असुरा एवेत्यर्थ । केनापि अपरिज्ञेयेन कारणेन निमित्तेन भुवि जा

ता' भूमौ मानुषत्वेन वर्तामहे । तेन हेतुना स विष्णु अस्मान् जेतु परिभवितु सन्नह्यति उद्युक्त' । कुत भवतेदमधिगतमिति चेत् अत्राह— अय अर्थ । वय असुराशसम्भवा इत्येष वृत्तान्त नारदेनोक्त । किलेति प्रसिद्धौ । युष्माभि अविदितपूर्व इति भाव ॥ ॥ ९ ॥

अतस्तदुच्छेदविधौ विनिद्राः
यतध्वमद्यैव बलानुरूपम् ।
नखाग्रलाव्यस्तरुरङ्कुरात्मा
परश्वधस्यापि ततोऽतिभूमिः ॥ १० ॥

तत् किं अस्माभि' कर्तव्यमिति चेदत्राह— अत इति ॥ अत अस्मात् कारणात् यूय विनिद्रा जाग्रदबुद्धय तस्य विष्णो उच्छेदविधौ उन्मूलनकर्मणि बलानुरूप शक्तिसदृश अद्यैव इदानीमेव यतध्व प्रयत्न कुरुत । प्रयतिष्यामहे क्रमेण किं त्वरयेति चेत् अत्र दृष्टान्तेन त्वरयति— नखेति ॥ तरु वृक्ष अङ्कुरात्मा अङ्कुरावस्थ नखाग्रेण लाव्य छेत्तु शक्य । अथवा अवश्य लाव्य छेदनीय एवेत्यर्थ । तत उपरि अङ्कुरावस्थाया उपेक्षितस्सन् परश्वधस्य निशितबृहत्कुठारस्यापि अतिभूमि अतिक्रान्तविषय स्यादिति शेष ॥ ॥ १० ॥

यस्मिन् भवत्याश्रितवत्सलत्वं
विप्रेषु यस्यास्ति विशेषसङ्गः ।
मनोहरं यश्च बिभर्ति रूपं
वधं स बालोऽर्हति मत्सकाशात् ॥ ११ ॥

स कुत्रास्ते । कथ वा ज्ञायत इति चेदत्राह— यस्मिन्निति ॥ यस्मिन् बाले आश्रितेषु जनेषु वत्सलत्व वात्सल्य भवति । यस्य विप्रेषु विशेषेण अतिशयेन सङ्ग' सक्ति अस्ति । असाधारणा भक्तिरिति यावत् ।

यश्च मनोहर द्रष्टृणा आनन्दकर रूप बिभर्ति । त्रयो ह्येते विष्णुशसम्भवा इति भाव । तदुक्तम्— 'विप्रेषु भक्तो विधुरो दयालु विद्याविशुद्धो विमलाङ्गकान्ति । विवेकशाली च विभाव्यते य स एव विष्णुर्भुवि मर्त्यरूप'इति । स तादृश बाल मत्सकाशात् वध अर्हति । भवद्भि स हन्तव्य इत्यर्थ ॥ ॥ ११ ॥

मखाश्च तत्प्रीतिकृतो निवार्याः
निवारणीया श्रुतिरग्रिमाऽपि ।
तृणीकृताशेपजनप्रभावा
संस्तौति या तन्महिमानमेव ॥ १२ ॥

मखा इति ॥ भवद्भि तस्य विष्णो प्रीतिकृत प्रियङ्करा मखा यागाश्च निवार्या निहन्तव्या । अग्रिमा श्रुति उपनिपत् सा च निवारणीया निरोद्धव्या । किं अनया वारितयेति चेदत्राह— या श्रुति तृणीकृत तृणवत् अनादृत अशेषस्य विष्णुव्यतिरिक्तस्य जनस्य प्रभाव उत्कर्प यया तादृशी सती तस्य विष्णो महिमान महत्त्वमेव सस्तौति सम्यक् प्रशसति । तस्या अनिवारिताया तद्वर्द्धिता विष्णुभक्ति लोकस्य न विरमेदिति भाव ॥

गते विरामं गरुडध्वजेऽस्मिन्
मखेषु सर्वत्र निवारितेषु ।
सुरेषु सर्वेष्वपि दुर्बलेषु
हस्ते भविष्यत्यमरावती नः ॥ १३ ॥

गत इति ॥ अस्मिन् अस्मान् द्वेष्टु अवतीर्णे गरुडध्वजे विष्णो विराम अवसान गते सति सर्वत्र सर्वप्रदेशेषु मखेषु यज्ञेषु अथवा सर्वेषु नित्यनैमित्तिकेषु कर्मसु निवारितेषु प्रतिषिद्धेषु सत्सु सर्वेषु सुरेषु देवेष्वपि दुर्बलेषु क्षीणबलेषु । 'अन्नमेव हि शरीरिणा बल'मिति वचनात् मखप्रणा-

शात् मखाशिन पुन न जीवेयुरिति भाव । अत्र तेष्वपि सन्हीनेषु सत्सु अमरावती न अस्माकं हस्ते भविष्यति अधीना भविष्यतीत्यर्थ ॥ १३ ॥

**इत्यूचिपस्तस्य पदोपकण्ठं**
**नीराजयन्तो मकुटप्रभाभिः ।**
**अवादिषुर्विक्रमदर्पितास्ते**
**कृताट्टहासध्वनिकम्पिताशाः ॥ १४ ॥**

इतीति ॥ ते प्रलम्बप्रमुखा इत्यूचिप एव उक्तवत तस्य कंसस्य पदोपकण्ठ चरणसमीप मकुटाना किरीटाना प्रभाभि नीराजयन्त नाराजनविधिमिव कुर्वन्त । पदान्तिके प्रणमन्त इत्यर्थ । विक्रमेण स्वपराक्रमेण दर्पिता' सञ्जाताहङ्कारा अत एव कृतेन अट्टहासध्वनिना सिंहनादेन कम्पिताशा चलितदिगन्तास्सन्त अवादिषु उक्तवन्त ॥ ॥ १४ ॥

**किं चिन्तया पार्थिव भुङ्क्ष्व भोगान्**
**अस्मासु जीवत्सु कुतो रिपुस्ते ।**
**कथं मयूखेषु परिस्फुरत्सु**
**सरोजबन्धोस्तमसाऽभिभूतिः ॥ १५ ॥**

उक्तिप्रकारमाह— किमिति ॥ हे पार्थिव राजन् चिन्तया किं प्रयोजनम् । 'विचिन्तयन्दुश्चरितं मदीय'मित्यादि यदुक्त भवता तथाविधदुश्चिन्ता न कर्तव्येत्यर्थ । भोगान् इच्छानुरूपसुखसाधनानि भुङ्क्ष्व । कामचरानुज्ञाया लोट् । अस्मासु मन्त्रिप्रवरेषु सत्सु ते तव रिपु शत्रु कुत कुत्र सम्भवति । अत्र दृष्टान्तमाह— मयूखेषु रश्मिषु परित सर्वत स्फुरत्सु प्रदीप्यमानेषु सत्सु सरोजबन्धो सूर्यस्य तमसा अन्धकारेण अभिभूति अभिभव कथ भवति । तम कर्तृकात्मापजय न स्यादित्यर्थ ॥ १५ ॥

अमातरिश्वानमहव्यवाहं
असूर्यशीतांशुमवज्रपाणिम् ।
अनच्युतेशानपितामहं च
द्रष्टासि राजन्नचिरेण लोकम् ॥ १६ ॥

अमातरिश्वानमिति ॥ हे राजन् त्व लोक भुवन अचिरेण क्षिप्रमेव मातरिश्वा वायु न विद्यते यत्रेति तादृश द्रष्टासि द्रक्ष्यसि। एव उत्तरत्रापि। अविद्यमान हव्यवाह् अग्नि यत्र। अविद्यमानौ सूर्यशीतांशू यत्र। अविद्यमान वज्रपाणि इन्द्र यत्र। अविद्यमान अच्युत विष्णु ईशान शिव पितामह ब्रह्मा यत्र, तथाविध द्रष्टासि ॥ ॥ १६ ॥

इत्यूचिपस्तानुचितोपचारैः
सम्भाव्य कृत्येषु समादिदेश ।
स देवकीमानकदुन्दुभिं च
विमोचयामास च बन्धनस्थौ ॥ १७ ॥

इतीति ॥ स कस इत्यूचिष एव उक्तवत तान् प्रलम्बादीन् उचितै योग्यै उपचारै अन्नपानाभरणादिसम्माने सम्भाव्य पूजयित्वा कृत्येषु जगद्ध्वंसनरूपकार्येषु समादिदेश सम्यक् नियुक्तवान्। बन्धनस्थौ बन्धने स्थितौ देवकीं आनकदुन्दुभिञ्च विमोचयामास विगतबन्धौ कृतवान् ॥

लब्ध्वा निधानं न तथा दरिद्रो
गतिं समासाद्य तथा न पंगुः ।
तथा न चान्धो दृशमाप्य हृष्येत्
यथाऽऽसपुत्रस्स जहर्ष नन्दः ॥ १८ ॥

लब्ध्वेति ॥ आप्तपुत्र प्राप्ततनयोत्पत्ति स नन्द नन्दगोप यथा येन प्रकारेण जहर्ष हृष्टवान् तथा तादृशप्रकार दरिद्र निर्धन निधान निक्षेपकुम्भ लब्ध्वाऽपि न हृष्येत् हृष्टो न भवेत् । तथा पगु पदा खञ्ज गतिं स्वच्छन्दगमन समासाद्य प्राप्य न हृष्येत् । तथा अन्ध नष्टलोचन दृश दर्शन अप्राप्य लब्ध्वा न च हृष्येदिति । एवा य हर्ष भवेत् ततोऽधिको नन्दस्य हर्ष अभूदित्यर्थ ॥ ॥ १८ ॥

तपने चरमाचलं प्रपन्ने
तमसा च स्थगितेषु दिङ्मुखेषु ।
यमुनातटवासिनं तमूचे
वसुदेवः प्रतिपद्य नन्दगोपम् ॥ १९ ॥

तपन इति ॥ तपने सूर्ये चरमाचल अस्ताचल प्रपन्ने प्राप्ते सति तमसा अन्धकारेण दिङ्मुखेषु दिगन्तरेषु च स्थगितेषु आच्छादितेषु सत्सु वसुदेव यमुनातटे वस्तु शीलमस्येति तथाभूत तनयोत्पत्तिप्रहृष्ट नन्दगोप प्रतिपद्य प्राप्य बहुमान्य च । 'प्रतिपत्तिस्तु गौरवे । प्राप्ता विति वचनात्। उवाच उक्तवान् । वसन्तमालिकावृत्तमिदम् । 'विषमे ससजा गुरू समे चेत् सभरा गौ च वसन्तमालिका स्या'दिति लक्षणात् ॥ ॥ १९ ॥

तपसा तव नन्दगोप मन्ये
फलितं जन्मसहस्रसञ्चितेन ।
ऋणमन्त्यमपोहितुं त्वदीयं
यदयं पुत्रनिधिस्समाविरासीत् ॥ २० ॥

तपसेति ॥ हे नन्दगोप तव जन्मसहस्रेषु बहुषु जन्मान्तरेषु सञ्चितेन समर्जितेन तपसा फलित फल दर्शितमिति अह मन्ये कल्पयामि । यत् यस्मात् कारणात् पुत्र एव निधि निक्षेप अन्त्य ऋण पितृविषय

सन्तत्या निष्केतव्य त्वदीयं तत्र ऋण अपोहितु निराकर्तुं सम्यक् आविरासीत् आविर्भूतः । लब्धनिक्षेपेण किं दुर्लभ ऋणमोचनमिति द्योत्यते ॥२०॥

इह खेलति पूतनेति कृत्या
शिशुहत्यानिरता पुरोपकण्ठे ।
तदहर्निशमत्र रक्षणीयो
नयनानन्दकरस्सुतस्त्वयाऽयम् ॥ २१ ॥

इहेति ॥ इह अस्मिन् प्रदेशे पुरस्य उपकण्ठे समीपे शिशुहत्यायां बालवधे निरता तत्परा पूतनेति पूतनाख्या कृत्या पिशाची खेलति सलीलं सञ्चरति । शिशुमारणमेव अस्याः क्रीडेति भावः । तत् तस्माद्धेतोः अत्र अस्मिन् समये त्वया नयनयोः आनन्दकरः अयं सुतः पुत्रः अहर्निशं अहनि निशायाञ्च रक्षणीयः रक्षितुमर्हः ॥ ॥ २१ ॥

अथवा किमिवास्यते त्वयाऽस्मिन्
निजमुत्सृज्य पदं पुरोपकण्ठे
सविधे न वसन्ति बुद्धिमन्तः
फणिनो वायुसखस्य भूपतेश्च ॥ २२ ॥

अन्यच्च । राजकुलसचारोऽप्यनुचित इत्याह—

अथवेति ॥ अथवेति पक्षान्तरद्योतकमव्ययम् । त्वया निजं आत्मीयं पदं स्थानं गोकुलं उत्सृज्य उपेक्ष्य अस्मिन् पुरस्य उपकण्ठे राजधान्याः समीपे किमिव किमर्थम् । किमिवेत्येकमव्ययम् । आस्यते स्थीयते । तत् असांप्रतमित्याह——बुद्धिमन्तः मतिमन्तः विवेकिन इत्यर्थः । फणिनः सर्पस्य, वायुसखस्य अग्नेः, भूपतेः राज्ञश्च सविधे सन्निधौ न वसन्ति न वासं कुर्वन्ति । अपायस्य अतिसुलभत्वादिति भावः ॥ ॥ २२ ॥

प्रतिवेदि निविष्टपूर्णकुंभं
विलसत्तोरणमुज्ज्वलप्रदीपम् ।
व्रज गोकुलमाकुलं प्रजाभिः
भवदीयागमनप्रहर्षिणीभिः ॥ २३ ॥

अस्मिन् समये तु विशेषतो न परित्याज्यं गोकुलमित्याह—

प्रतिवेदीति ॥ त्वं गोकुलं गोष्ठं व्रज गच्छ । प्राप्तकाले लोट् । तदागमने तत्र संभाव्यमानविशेषमाह विशेषणचतुष्टयेन— प्रतिवेदि वेदिषु निविष्टपूर्णकुंभं निहितकनकादिपूर्णकलशं विलसत्तोरणं उच्छ्रितध्वजादिना शोभमानबहिर्द्वारम् । 'तोरणोऽस्त्री बहिर्द्वार'मित्यमरः । उज्ज्वलन्तः प्रज्वलन्तः प्रदीपा यस्मिन् तथाभूतम् । भवदीयेन आगमनेन हेतुना प्रहर्षिणीभिः प्रासहर्षशीलाभिः प्रजाभिः गोपगोपीजनैः आकुलं सङ्कीर्णम् । भवत्प्राप्तावेव भविष्यतीत्यर्थः ॥ ॥ २३ ॥

शिशुरस्ति ममापि रौहिणेयः
भवदीये विषये विवर्द्धमानः ।
स च साधु निरीक्ष्य रक्षितव्यः
वपुषा केवलमावयोर्हि भेदः ॥ २४ ॥

शिशुरिति ॥ ममापि शिशुः बालः रौहिणेयः रोहिणीसुतः भवदीये विषये देशे विवर्द्धमानोऽस्ति विद्यते । स च साधु सम्यक् निरीक्ष्य निरीक्षणं इष्टदानेन लालनम् । तत् कृत्वा रक्षितव्यः त्रातव्यः । त्वयेति शेषः । ननु त्वदीयः मया कथं रक्षितव्यः इति चेत् अत्राह— आवयोः मम च तव च वपुषा शरीरेण केवलं परं भेदः । मनस्तु एकमेवेत्यर्थः ॥ २४ ॥

इत्युक्त्वा गतवति देवकीसहाये
सन्त्रस्तः कथमपि नीतरात्रिशेषः ।

आरोहत्युदयमहीधरस्य शृङ्गं
तिग्मांशौ निजवसतिं प्रति प्रतस्थे ॥२५॥

इतीति ॥ इति एवंप्रकारं उक्त्वा देवकीसहाये वसुदेवे गतवति सन्त्रस्तः पूतनापतनशङ्कया भीतः कथमपि यत्नेन नीता यापिता रात्रिः शेषः येन तादृशः स नन्दगोपः तिग्मांशौ सूर्ये उदयमहीधरस्य उदयाद्रेः शृङ्गं आरोहति सति दिनारम्भ एवेत्यर्थः । निजवसतिं गोष्ठं प्रति प्रतस्थे प्रस्थितवान् । प्रहर्षिणी नाम वृत्तमिदम् । 'म्नौज्रौगस्त्रिदशयतिः प्रहर्षिणीय'मिति लक्षणात् ॥ ॥ २९ ॥

सचकितमृगमण्डलानि कुर्वन्
शकटशतध्वनिभिर्वनान्तराणि ।
प्रमुदितमथ गोकुलं प्रपेदे
दिशिदिशि मारुतधूतकेतुमालम् ॥ २६ ॥

सचकितेति ॥ शकटानां वाहनविशेषाणां शतस्य समूहस्य । अनेन बहुगोपसङ्घसहितत्वं दर्शितम् । ध्वनिभिः शब्दैः वनान्तराणि विपिनावकाशान् सचकितानि चकितेन भयेन सहितानि मृगमण्डलानि वन्यसमूहा येषु तादृशानि कुर्वन् । अथ अनन्तरं स नन्दगोपः प्रमुदितं सन्तुष्टजनं दिशिदिशि सर्वासु दिक्षु मारुतेन मरुता धूतकेतुमालं कंपितध्वजकदम्बं गोकुलं प्रपेदे प्राप्तवान् । पुष्पिताग्रानाम वृत्तमिदम् । 'अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ २६ ॥

निजवसतिमभिप्रपद्य तुष्टः
किमपि न कर्म करोति गोपः ।
नवनळिनपलाशचारुनेत्रं
वदनमहर्निशमात्मजस्य पश्यन् ॥ २७ ॥

निजेति ॥ नन्दगोपः निजवसतिं आत्मभवनं अभिप्रपद्य अभिगम्य आत्मजस्य पुत्रस्य नवनलिनस्य नूतनविकसितांबुजस्य पलाशे पत्रे इव चारुणी सुन्दरे नेत्रे यस्मिन् तत् तादृशं वदनं मुखं अहर्निशं दिवारात्रं पश्यन् तुष्टः दर्शनाद्धेतोः अतिप्रहृष्टस्सन् किमपि कर्म स्नानभोजनादिकमपि न करोति कर्तुं न शक्तो भवति । तादृशानन्दसागरमग्नत्वादिति भावः । अत्र कवेरपि भक्त्यतिशयेन आत्मनः तदानीन्तनत्वभावनया करोतीति वर्तमान निर्देशः ॥ ॥ २७ ॥

**मुग्धभावमधुरेण रञ्जयन्**
**शैशवेन हृदयं व्रजौकसाम् ।**
**गोकुले स विजहार केशवः**
**क्षीरवारिनिधिमप्यचिन्तयन् ॥ २८ ॥**

मुग्धेति ॥ स केशवः हरिः मुग्धभावेन मोहनस्वभावेन हेतुना मधुरेण मनोहरेण शैशवेन बालभावेन व्रजौकसां गोष्ठवासिनां हृदयं रञ्जयन् रागयुक्तं कुर्वन् गोकुले विजहार क्रीडितवान् । क्षीरवारिनिधिं दुग्धाब्धिमपि अचिन्तयन् अस्मरन् सन्नित्यनेन निजास्पदादपि गोकुले रमणीयत्वं द्योत्यते । रथोद्धतानाम वृत्तमिदम् । 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥ ॥ २८ ॥

**वदनं मधुसूदनः कराभ्यां**
**चरणाङ्गुष्ठमुपानयत् पिपासुः ।**
**गलितेव ततस्सुरस्रवन्ती**
**नखमुक्तामणिदीधितिच्छलेन ॥ २९ ॥**

वदनमिति ॥ मधुसूदनः बालकृष्णः कराभ्यां चरणस्य अंगुष्ठं पिपासुः पातुमिच्छुस्सन् वदनं उपानयत् प्रापयामास । अयं हि उत्तानशयन-

स्य शिशोः स्वभावः । ततः चरणांगुष्ठनखस्यैव मुक्तामणेः दीधितिच्छलेन रश्मिव्याजेन सुरस्रवन्ती गङ्गा गालेना निपतितेवेत्युत्प्रेक्षा । नलपह्नुतिः । इवशब्दस्यापि श्रवणात् ॥ ॥ २९ ॥

अमृतांशुरिवापरः प्रमोदं
नयनानां जनयन् स पद्मनाभः ।
भवनं भवनात् करौ कराभ्यां
व्रजयोषिद्भिरनीयताङ्कमङ्कात् ॥ ३० ॥

अमृतांशुरिति ॥ अपरः अमृतांशुरिव चन्द्र इव नयनानां द्रष्टृजनलोचनानां प्रमोदं जनयन् उत्पादयन् स पद्मनाभः बालकृष्णः व्रजयोषिद्भिः गोकुलस्त्रीभिः भवनात् भवनं अन्यगृहं कराभ्यां सकाशात् करौ अन्यकरौ अङ्कात् उत्सङ्गात् अङ्कं अन्यस्य उत्सङ्गं अनीयत प्रापितः ॥ ॥३०॥

अथ कदाचिच्छकटस्य शायितः
स्वकार्यपर्याकुलया यशोदया ।
स लीलया पादसरोरुहं शनैः
उदश्चयामास सरोजलोचनः ॥ ३१ ॥

अथ इति ॥ कदाचित् कस्मिंश्चिद्दिने स्वकार्ये गृहकृत्यादौ पर्याकुलया तत्परया यशोदया शकटस्य वाहनविशेषस्य अधश्शायितः सरोजलोचनः कृष्णः पादसरोरुहं एकपादाब्जं लीलया क्रीडया शनैः मन्दं उदश्चयामास । उद्गमयामास ॥ वंशस्थं नाम वृत्तमिदम् । 'जतौ तु, वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ ॥ ३१ ॥

मधुभिदश्चरणाम्बुजताडितं
शकटमाशु समुत्थितमम्बरे ।

विपरिवृत्य पपात महीतले
पटुतरध्वनिपूरितदिङ्मुखम् ॥ ३२ ॥

मधुभिद इति ॥ मधुभिदः कृष्णस्य चरणाग्रेण ताडित प्रहृत शकट आशु क्षिप्र अभ्रे गगने समुत्थित समुत्पतित सन् विपरिवृत्य ततोऽधोमुख विनिवृत्य महीतले भूतलपृष्ठे पटुतरेण उच्चतरेण ध्वनिना शब्देन पूरित दिङ्मुख यथा भवति तथा पपात पतितम्। द्रुतविलम्बित नाम वृत्तमिदम्। 'द्रुतविलम्बितमाह नभौभरा'विति लक्षणात् ॥ ॥ ३२ ॥

शकटपतनजन्म नन्दमुख्याः
स्तनितमिव ध्वनितं निशम्य गोपाः।
किमिदमिति भयेन तत्र जग्मुः
त्वरितगतिच्यवमानकेशबन्धाः ॥ ३३ ॥

शकटेति ॥ नन्दमुख्या नन्दप्रधाना गोपा स्तनित गर्जितमिव शकटस्य पतनात् जन्म जनन यस्य तथाविध ध्वनित शब्द निशम्य श्रुत्वा किमिदमिति एतत् कि भवेदिति भयेन भीत्या त्वरितया सञ्जातत्वरया गत्या गमनेन च्यवमाना भ्रश्यन्त केशबन्धा चिकुरबन्धनानि येषा तथा सन्त तत्र तस्मिन् प्रदेशे जग्मु प्रापु । यत श्रुतश्शब्द त देश प्राप्ता इत्यर्थ ॥ ॥ ३३ ॥

कुचकलशविलग्नपाणिपद्मा
विगलितबन्धमनोज्ञकेशपाशा ।
सपदि सह सखीभिरन्वधावत्
कलमणिनूपुरशिञ्जिता यशोदा ॥ ३४ ॥

कुचेति ॥ यशोदा कुचकलशयो स्तनकुम्भयो विलग्न निषक्त ि

हिते इत्यर्थः । पाणिपद्मे कराब्जे यस्याः । निगळितबन्धः श्लथबन्धनः अ त मनोज्ञः अतिरमणीयः केशपाशः प्रशस्तकेशः यस्याः । कळं मधुरं मणि मययोः नूपुरयोः पादकटकयोः शिञ्जितं रणितं यस्याः तथा सती । सखी भिः सह सपदि नन्दादीन् अन्वधावत् अन्वाद्रौत् ॥ ॥ ३४ ॥

कृतस्मितं क्वचिदपरिक्षतं सुतं
विलोक्य तं प्रमुदितमानसं परम् ।
व्रजौकसां सविधनिवासिनां मुखात्
विसिस्मिये विदिततदीयविक्रमा ॥३५॥

कृतेति ॥ सेत्यत्रानुवर्तते । सा यशोदा क्वचित् प्रदेशे अपरिक्षतं अक्षतशरीरं कृतस्मितं तं तादृशं सुतं पुत्रं विलोक्य परं अत्यर्थं प्रमुदित-मानसं सन्तुष्टहृदयं सविधनिवासिनां अन्तिकवर्तिनां व्रजौकसां गोपानां मुखात् विदितं ज्ञातं तदीयं तस्य सुतस्य विक्रमं चरणेन शकटपातन-रूपा प्रवृत्तिः यया तथा सती विसिस्मिये विस्मिताऽभूत् । 'ष्मिङ् ईषद्धसने' इत्यस्माल्लिट् । आत्मनेपदम् । रुचिरानाम वृत्तमिदम् । 'चतुर्ग्रहैरिह रुचि रा जभस्मगा इति लक्षणात् ॥ ॥ ३५ ॥

स्तुतशोणितमेव मन्यमाना
चरणं तस्य निसर्गपाटलं तत् ।
उदमार्जयदंशुकाञ्चलेन
द्रुतमागत्य पुनःपुनर्यशोदा ॥ ३६ ॥

स्तुतेति ॥ यशोदा तस्य सुतस्य निसर्गेण स्वभावेन पाटलं अरुणं तच्चरणं पादतलमेव स्तुतशोणितं गळितरक्तमिति मन्यमाना अवबुध्यमाना सती द्रुतं आगत्य सत्वरं उपेत्य अंशुकाञ्चलेन वस्त्राग्रेण पुनःपुनः भूयो-भूयोऽपि उदमार्जयत् मार्जनं कृतवती ॥ ॥ ३६ ॥

तिलकं मधुविद्विषो ललाटे
रजसा गोमयजन्मना विधाय ।
उरसा परिरभ्य नन्दगोपः
सुचिरं तस्य सुमङ्गलानि दध्यौ ॥ ३७॥

तिलकमिति ॥ नन्दगोपः मधुविद्विषः कृष्णस्य ललाटे फाले गोमयात् जन्म यस्य तादृशेन रजसा गोमयपरागेण तिलकं विशेषकं विधाय कृत्वा । इदं अमङ्गलनिवृत्त्यर्थम् । यदाहु— 'गोमयोद्धूलनं कुर्यात् अशुभस्य प्रशान्तये' इति । उरसा निजवक्षसा परिरभ्य तं आश्लिष्य तस्य सुमङ्गलानि शोभनकल्याणानि चिरं दीर्घकालं दध्यौ ध्यातवान् । शकटपातभीतः सन्निहितः पर एवंविधानर्थो माभूवन्निति कुलदेवतानि प्रार्थितवानित्यर्थः ॥

शकटं मधुसूदनस्य दृष्ट्वा
चरणोदञ्चनविभ्रमेण भग्नम् ।
अथ वारिनिधेर्विवेश गर्भं
स्वरथस्यापि विशङ्क्य भङ्गमर्कः ॥ ३८ ॥

अथ अस्तमनवर्णनमारभते—

शकटमिति ॥ अथ अनन्तरं अर्कः सूर्यः मधुसूदनस्य चरणोदञ्चनेन पादोत्क्षेपरूपेण विभ्रमेण विलासेन भग्नं शकलितं शकटं दृष्ट्वा स्वरथस्य आत्मरथस्यापि भङ्गं विशङ्क्य वाहनभङ्गे प्रवृत्तोऽयं कृष्णः मद्रथमपि कदाचित् भङ्क्ष्यतीति जातशङ्क इव वारिनिधेः गर्भं विवेश प्रविष्टवान् । अत्र इवादिशब्दाभावात् गम्योत्प्रेक्षा ॥ ॥ ३८ ॥

परितस्स्फुरता नवेन सन्ध्या-
महसा पल्लवपाटलेन लिप्ताः ।

पतिता इव पावके विरेजुः
ककुभो दुस्सहभानुविप्रयोगात् ॥ ३९ ॥

परित इति ॥ परितः समन्तात् स्फुरता प्रकाशमानेन नवेन पल्लव तरुकिसलयमिव पाटलेन अरुणेन सन्ध्यायाः महसा तेजसा लिप्ताः स्पृष्टाः कुङ्कुमादिचर्चिता इवेत्यर्थः । ककुभः दिशः विरेजुः शुशुभिरे । अत्रोत्प्रेक्षते— दुस्सहः सोढुं अशक्यः भानोः विप्रयोगः यासां तथाभूतत्वात् पावके पतिताः शरीरत्यागार्थं अग्निं प्रविष्टा इवेति । प्रियतमविरहे पतिव्रताना इद उचितमेवेति भावः ॥ ॥ ३९ ॥

क्षुभितश्चिरमम्बरांबुराशिः
तपनस्यन्दनवाहनावगाहात् ।
स्फुरदुद्भटतारकापदेशात्
सहसाऽऽकीर्यत फेनमण्डलेन ॥ ४० ॥

क्षुभित इति ॥ तपनस्यन्दनस्य सूर्यरथस्यैव वाहनस्य प्रवहणस्य अवगाहात् मज्जनाद्धेतोः अम्बरमेव अबुराशिः चिर अत्यर्थं क्षुभितः चलितः सहसा तत्क्षणमेव स्फुरन्तीना शोभमानाना उद्भटाना प्रकाशिना तारकाणा नक्षत्राणा अपदेशात् व्याजात् । तादृश अपदेश आश्रित्येति ल्यब्लोपे पञ्चमी । फेनाना मण्डलेन समूहेन आकीर्यत आकीर्णः व्याप्त इत्यर्थः । अब्धौ हि महतो यानपात्रस्य मज्जने फेनोद्गमस्सपद्यते ॥ ॥ ४० ॥

अहिमरुचि रसातलं प्रविष्टे
भयचकितस्स्वविनाशमाकलय्य ।
तत इव तरसोत्पतन्नसीमा
तिमिरभरः पृथिवीतलं प्रपेदे ॥ ४१ ॥

अहिमेति ॥ अहिमरुचि सूर्ये रसातलं पाताळं प्रविष्टे सति स्वविनाशं आत्मनाशं आकलय्य आशङ्क्य अमी तमोऽनवधिः तिमिरभरः तमस्समूहः भयेन त्रासेन चकितः कंपितस्सन्निव ततः रसातलात् सकाशात् तरसा उत्पतन् क्षिप्रं उपरि गच्छन् पृथिवीतलं भूतलं प्रपेदे प्राप्तः। अत्र आलोकाभावरूपस्य तमसः सूर्याद्भीतेः पाताळात् उद्गमनाभावेऽपि तथा संभावनात् उत्प्रेक्षा ॥ ॥ ४१ ॥

भूरन्तरिक्षं भवनानि रथ्याः
वनानि शैलास्सरितस्समुद्राः ।
ध्वान्ते दिशां रुन्धति चक्रवाळं
व्यक्तं न केनापि किमप्यवेदि ॥ ४२ ॥

भूरिति ॥ ध्वान्ते तमसि दिशां चक्रवाळं दिङ्मण्डलं रुन्धति आवृण्वति सति केनापि जनेन किमपि वस्तु व्यक्तं स्पष्टं यथा भवति तथा नावेदि न विदितम् । केनापीत्युक्तमेव भूरित्यादिना किंचित् प्रपञ्चयति— भूः भूमिः, अन्तरिक्षं, भवनानि गृहाः, रथ्याः राजमार्गाः, वनानि विपिनानि, शैलाः पर्वताः, सरितः नद्यः, समुद्राः अब्धयः इति । उपलक्षणमिदं अनिर्देश्याना पदार्थानाम् ॥ ॥ ४२ ॥

अथ प्रयाति प्रहरे यशोदा
जने च किंचिन्निभृते सनिद्रे ।
पुत्रं पयःपानगुरुप्रमोदं
प्रस्वापयन्ती कलमित्यगायत् ॥ ४३ ॥

अथेति ॥ प्रहरे यामे । 'यामप्रहरौ'इत्यमरः । — पूर्वयामे प्रयाति अवसिते सति जने च गोपगोपीवर्गे सनिद्रे निद्रां गते अत एव किंचित् निभृते निश्शब्दे सति यशोदा पयःपानेन स्तन्यपानेन हेतुना गुरु-

प्रमोद अधिकसन्तोष पुतं प्रस्वापयन्ती निद्रां प्रापयन्ती सती कळं मधुरं इति एवंप्रकार अगायत् गान चकार। शिशुस्वापनोचितानि कानिचित् प्रमेयाणि अकथयदित्यर्थः ॥ ॥ ४३ ॥

कुन्दत्विषस्तालफलप्रकाशाः
तापिञ्छवर्णास्तरुणार्कभासः।
प्रभूतदुग्धा नवनीतवत्यो
गावस्सहस्रं तनय त्वदीयाः ॥ ४४ ॥

गानप्रकारमाह— कुन्देति॥ हे तनय कुन्दत्विषः कुन्दकुसुममिव धवळाः। काश्चनेति शेषः। तथाऽन्याः तालफलस्येव प्रकाशः यासां तादृश्यः। नीलरक्तवर्णा इत्यर्थः। तथा कतिचन तापिञ्छवर्णाः तमालरुचः नीलरूपाः। तथा पराः तरुणार्कभासः अरुणच्छवयः प्रभूतदुग्धाः प्रचुरक्षीराः नवनीतवत्यः बहुनवनीतशालिन्यः सहस्रं गावः धेनवः त्वदीयाः त्वत्सम्बन्धिन्यः। इमाश्च एव ते प्रदास्यामि क्षिप्रं स्वपिहीति भावः ॥ ४४ ॥

प्रियाळखर्जूरसमग्रसानुः
फलाढ्यरंभावनशोभनीयः।
ननूपभोगाय सुतायमास्ते
गोवर्धनो नाम महीधरस्ते ॥ ४५ ॥

प्रियाळेति॥ हे सुत प्रियाळैः राजादनवृक्षैः खर्जूरैः तृणद्रुमविशेषैश्च समग्रसानुः सपूर्णप्रदेशः फलाढ्येन भूयिष्ठफलेन रंभावनेन कदळीसमूहेन शोभनीयः रमणीयः गोवर्द्धनो नाम अयं महीधरः शैलः ते तव उपभोगाय अनुभवार्थं क्रीडार्थमित्यर्थः। नन्वास्ते वर्तते खलु। श्वः प्रातरेव तत्र गन्तव्य इदानीं निद्राहीत्याशयः ॥ ॥ ४५ ॥

सरसिरुहवने गतेऽपि निद्रां
कथमिव ते नयनांबुजे विनिद्रे ।
श्रुतिपरिचयशालिनो हि कर्म
स्वजननिषेवितमेव संश्रयन्ते ॥ ४६ ॥

सरसिरुहेति ॥ हे सुत सरसिरुहाणां पद्मानां वने समूहे निद्रां गतेऽपि मुकुलिते सत्यपि ते नयने एव अंबुजे कथमिव कुतः हेतोः विनिद्रे निद्रारहिते विकसिते एव वर्तेते इति शेषः । श्रुतिपरिचयेन शास्त्रशीलनेन । कर्णाभ्यर्णविस्तीर्णतयेत्यपि च स्फुरति । शालिनः श्लाघ्याः । 'शलश्लाघाया'मिति धातुः । स्वजननिषेवितं स्वीयजनानुष्ठितं कर्मैव आश्रयन्ते अङ्गीकुर्वन्ते । हि यस्मात् तस्मात् स्वजातिषु पद्मेषु सुप्तेषु तव नेत्रांबुजाभ्यामपि स्वप्तुमुचितमिति भावः ॥ ॥ ४६ ॥

तद्ध्वनिश्रवणजातकौतुका
बालजीवितविलोपविश्रुता
आजगाम गगनेन पूतना
यातना तनुमतीव देहिनाम् ॥ ४७ ॥

तदिति ॥ बालजीवितानां शिशुप्राणानां विलोपेन विनाशनेन विश्रुता प्रसिद्धा पूतना देहिनां प्राणभृतां यातना तीव्रवेदनेव तनुमती शरीरिणीव वर्तमाना तद्ध्वनिश्रवणेन तस्याः यशोदायाः बालस्वापनगानस्य श्रवणेन जातकौतुका । अत्र केनचित् बालेन भाव्यं तदेनं हनिष्यामीति कुतूहलवतीत्यर्थः । गगनेन आकाशमार्गेण आजगाम प्राप्ता ॥ ॥ ४७ ॥

साऽवतीर्य नभसो निशाचरी
गूढमेव निपसाद कुत्रचित् ।

सा च सुप्त इव वीक्षिते सुते
स्वापमाप सरसीरुहेक्षणा ॥ ४८ ॥

सेति ॥ सा निशाचरी रात्रिसञ्चारशीला पूतना नभसः अवतीर्य गगनात् अवतीर्णा कुत्रचित् क्वापि प्रदेशे गूढमेव प्रच्छन्नैव यशोदायाः निद्रां प्रतीक्षमाणा निषसाद निषण्णा। सा यशोदा च सुते सुप्त इव वीक्षिते निद्रां प्राप्तस्स्यादित्यवगते सति स्वापमाप निद्रां प्राप्तवती। सुतस्य स्वापस्तु पूतनावधप्रस्तावनारूप इत्यजानती सेयमिति कविः सान्तर्हासमाह सरसीरुहेक्षणेति। केवलसुन्दरीत्येवेति भावः ॥ ॥ ४८ ॥

कृष्णमङ्कमधिरोप्य निर्दया
दातुमारभत पूतना स्तनम्।
यत्पयोधरमुखे मुखार्पणात्
आयुषा शिशुजनो वियुज्यते ॥ ४९ ॥

कृष्णमिति ॥ यत्पयोधरमुखे यस्याः पूतनायाः स्तनचूचुके मुखस्य अर्पणात् निवेशाद्धेतोः शिशुजनः आयुषा प्राणैः वियुज्यते वियुक्तो भवति। सा तादृशी निर्दया निष्कृपा पूतना कृष्णं अङ्कं उत्सङ्गं अधिरोप्य स्तनं दातुं स्तन्यं पाययितुं आरभत आरब्धा ॥ ॥ ४९ ॥

पाञ्चजन्यमिव पूतनास्तनं
पाणिपल्लवयुगेन पीडयन्।
आननेन मधुशत्रुरान्तरा-
नाददे स तु ततस्समीरणान् ॥ ५० ॥

पाञ्चजन्यमिति ॥ स तु कृष्णस्तु पाणिपल्लवयोः पल्लवतुल्ययोः पाण्योः युगेन पूतनायाः स्तनं पाञ्चजन्यं आत्मनः शङ्खमिव पीडयन् गृह्णन्।

मधुशत्रुरिति शत्रुषु निर्दयत्वं चोत्यते । आननेन आस्येन ततः तस्याः शरीरात् आन्तरान् समीरणान् प्राणवायून् आददे आकृष्टवान् ॥ ॥५०॥

विप्रकीर्णकचवालपल्लवा
भग्नबाहुविटपा निशाचरी ।
सा पपात भुवि घोरनिस्वना
मारुताहतमहीरुहोपमा ॥ ५१ ॥

विप्रकीर्णेति ॥ विप्रकीर्णाः विक्षिप्ताः कचाः शिरोरुहा एव बालपल्लवाः यस्याः । कचाना कपिलवर्णत्वात् पल्लवत्वेन रूपणम् । भग्नौ बाहू एव विटपौ यस्यास्सा । निशाचरी पूतना घोरनिस्वना भीषणनादा सती भुवि मारुतेन आहतः भञ्जितः महीरुहः वृक्षः उपमा सादृश्यं यस्यास्सा पपात पतिता ॥ ॥५१॥

झटिति व्यपनीतगाढनिद्रो
महता तेन रवेण पूतनायाः ।
प्रतिपत्तुमियाय तां प्रवृत्तिं
सह गोपालगणेन नन्दगोपः ॥ ५२ ॥

झटितीति ॥ पूतनायाः महता उच्चैस्तरेण तेन रवेण व्यपनीता व्यपगता गाढनिद्रा यस्य सः नन्दगोपः सहगोपालगणेन गोपालसमूहेन सह ता प्रसिद्धा प्रवृत्तिं वृत्तान्तं प्रतिपत्तुं ज्ञातुं झटिति शीघ्रं इयाय गतवान् ॥

तस्याश्शरीरमधिरुह्य विचेतनायाः
क्रीडन्तमम्बुरुहलोचनमीक्षमाणाः ।
तस्थुस्समुन्मिषितविस्मयनिर्विकाराः
नासाधिरोपितकरांगुळ्यो मुहूर्तम् ॥ ५३ ॥

तस्या इति ॥ पूर्वश्लोके गोपालगणेन सह नन्दगोप इत्युक्तमेव समग्रमनुवर्तते । अतस्त इत्यध्याहार्यम् । ते नन्दगोपादयः विचेतनायाः परेतायाः तस्याः पूतनायाः शरीरं शवकळेबरं अधिरुह्य उपरि शयित्वा क्रीडन्तं करचरणचलनक्रीडां कुर्वन्तं अम्बुरुहलोचनं कृष्णं ईक्षमाणाः पश्यन्तः समुन्मिषितेन सम्यग्विकसितेन विस्मयेन आश्चर्यरसेन निर्विकाराः निश्चलाः । नासां नासाग्रं अधिरोपिताः तत्र निवेशिताः करांगुळ्यः तर्जन्यः यैः तथा सन्तः मुहूर्तं क्षणं तस्थुः स्थितवन्तः । वसन्ततिलकं नाम वृत्तमिदम् । 'उक्तं वसन्ततिलकं तभजाजगौ ग' इति लक्षणात् ॥ ॥ ५३ ॥

## नन्दः प्रमृज्य नयने मुहुरश्रुपूर्णे
## पुत्रं कृतान्तमुखनिर्गळितं निदध्यौ ।
## दध्यौ च तस्य नितरामभिवृद्धिकामः
## तत्त्वं परं स हृदयेन समाहितेन ॥५४॥

नन्द इति ॥ नन्दगोपः मुहुः पुनःपुनः अश्रुपूर्णे प्रमोदबाष्पावृते नयने प्रमृज्य पुत्रं कृतान्तस्य अन्तकस्य मुखतः वक्त्रात् निर्गळितं निपातितमिव निदध्यौ दृष्टवान् । मृतं जीवितं यावता प्रकर्षेण पश्यति तथा निध्यातवानित्यर्थः । तस्य सुतस्य नितरां भृशं अभिवृद्धिकामः अभ्युदयं वाञ्छन् सः नन्दः समाहितेन समाविष्टेन हृदयेन तत्त्वं परं ब्रह्मस्वरूपं दध्यौ ध्यातवान् ॥ ॥ ५४ ॥

## श्यामळः कमलपत्रलोचनो
## नीलकुन्तळभरश्शुचिस्मितः ।
## ध्यायतो मनसि तस्य सन्निधिं
## पुत्र एव विदधे पुनःपुनः ॥ ५५ ॥

श्यामळ इति ॥ ध्यायतः निष्कळब्रह्मध्यानं कुर्वतः तस्य नन्दस्य

मनसि श्यामलं मेघश्यामवर्णं कमलपत्रलोचनं पद्मपत्रविशालेक्षणं नीलकुन्तलभरं स्निग्धमेचकचभारं शुचिस्मितं शुभ्रमन्दहासं पुत्रं एव स्वतनूजं श्रीकृष्णं एव सकलनिग्रहएव पुनः पुनः सन्निधिं सन्निधानं प्रत्यक्षवीक्षणविषयं विदधे कृतवान् ॥ ॥ ५५ ॥

न क्षमं भवति पुत्रवासना-
निस्तरं हृदयमच्युतस्मृतौ ।
इत्यशेषदुरितापहारिणीः
अग्रजन्मभिरकारयत् क्रियाः ॥ ५६ ॥

न क्षममिति ॥ पुत्रवासनया पुत्रचिन्ताभ्याससंस्कारेण निस्तरं दृढतरं हृदयं अच्युतस्य परमात्मनः स्मृतौ स्मरणविषये न क्षमं भवति न शक्नोति । किं करोमीति भावः । किन्त्वन्यैः कारयाम्येवेति निश्चित्येत्यर्थः । अग्रजन्मभिः ब्राह्मणैः प्रयोज्यकर्तृभिः अशेषदुरितापहारिणीः निखिलपापानि अपहर्तुं शीलमासामिति तादृशीः क्रियाः शान्तिकपौष्टिकादिसत्कर्माणि कारयामास कर्तुं प्रयुक्तवान् ॥ ॥ ५६ ॥

पूतनाचरितभावनाभवं
दारुणं हृदयदारणं पितुः ।
श्रीपतिश्शमयति स्म वैशसं
क्रीडितैरखिललोकमोहनैः ॥ ५७ ॥

पूतनेति ॥ श्रीपतिः श्रीकृष्णः पूतनायाः चरितस्य दुश्चेष्टितस्य भावनायाः पुनः पुनरनुसन्धानात् भवः उद्भवः यस्य । अतः दारुणं हृदयदारणं हृदयभेदनं पितुः नन्दस्य वैशसं दुःखं अखिललोकस्य सर्वजनस्य मोहनैः मनोहरैः क्रीडितैः लीलाभिः शमयति स्म शमं प्रापितवान् ॥ ५७ ॥

स लोचने किञ्चिदुपान्तघूर्णिते
निधाय मातुर्वदने शुचिस्मितः।
पयोधरं पाणियुगावलंबितं
मनश्च तस्या मधुसूदनः पपौ ॥ ५८॥

स इति ॥ स तथाविधक्रीडाशाली मधुसूदन किंचित् ईषत् उपान्तयो अचलयो घूर्णिते सङ्कोचिते लोचने मातु यशोदाया वदने निधाय निक्षिप्य शुचिस्मित निहितमन्दहासस्सन् पाणियुगेन अवलम्बित धृत पयोधर स्तन तस्या मातु मनश्च हृदय च पपौ पीतवान् । तद्दर्शने मनोऽपि तदायत्तमासीदित्यर्थ ॥ ॥५८॥

पाणिजानुपरिचंक्रमश्रम-
स्वेदविन्दुमधुरं सुखं वहन् ।
धूसरेण वपुषा जनार्दनः
गोकुलं निखिलमन्वरञ्जयत् ॥ ५९ ॥

पाणीति ॥ जनार्दन पाणिभ्यां जानुभ्यां च परितश्चंक्रम सञ्चार तद्धेतुकात् श्रमात् आयासात् सञ्जात स्वेदविन्दुभि घर्मजलकणै मधुर सुन्दर मुख वहन् धूसरेण भूरजस्संवलनवर्णेन वपुषा उपलक्षित निखिल निश्शेष गोकुल गोष्ठवासिजन अन्वरञ्जयत् अनुरक्तमकरोत् । सर्वेषा आनन्द कृतवानिति यावत् ॥ ॥ ५९ ॥

परिभ्रमन्तं भुवि पाणिजानुना
गवामधस्तात् प्रविशन्तमेकदा ।
सुतं यशोदा गृहकृत्यतत्परा
ववन्ध पाशेन बलादुलूखले ॥६०॥

परीति ॥ गृहकृत्ये देवाराधनदधिमन्थनादिव्यापारे तत्परा निरता यशोदा एकदा कदाचित् भुवि पाणिजानुना पाणिभ्यां जानुभ्यां च । प्राण्यङ्गत्वात् एकवद्भावः । परिभ्रमन्तं परितस्सञ्चरन्तं गवां पशूनां अधस्तात् अधोभागं प्रविशन्तं सुतं कृष्णं बलात् मेनं गावः खुरपातेन कदाचित् परिमर्देयुरिति त अनिच्छन्तमप्यादायेत्यर्थः । पाशेन उलूखले बबन्ध नियमितवती ॥ ॥ ६० ॥

जनो हि यः कर्म करोति यादृशं
स सर्वथा तादृशमश्नुते फलम् ।
बलिः पुराऽबध्यत येन दानवः
स लोकनाथोऽपि तदाप बन्धनम् ॥६१॥

जन इति ॥ यः जनः यादृशं कर्म करोति सः जनः सर्वथा सर्वप्रकारेणापि तादृशं तदनुरूपं फलं अश्नुते लभते हि । प्रसिद्धमिदम् । तथा हि— पुरा पूर्वं येन भगवता बलिः महाबलिर्नाम दानवः असुरः अबध्यत बद्धोऽभूत् । सः लोकनाथः विश्वनाथस्सन्नपि बन्धनं आप प्राप्तवान् । यत् यस्मात् पूर्वकृतं बलिबन्धनस्य फलमेव इदानीं उलूखले बन्धनं अनुभूतमित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ॥ ६१ ॥

निखिलभुवनमुक्तिदे मुरारौ
भगवति गाढमुलूखले निबद्धे ।
परिशिथिलसमाधिराविरासीत्
मनसि महामुनिमण्डलस्य हासः ॥६२॥

निखिलेति ॥ निखिलेभ्यः सर्वेभ्यः भुवनवासिभ्यः मुक्तिदे मोक्षप्रदे भगवति मुरारौ विष्णौ गाढं भृशं उलूखले निबद्धे नियमिते सति महामुनिमण्डलस्य महतः महर्षिसमूहस्य मनसि परिशिथिलसमाधिर्गलितसमाधि-

बन्ध हास स्मित आविरासीत् आविर्भूत । बन्धमोचनबन्धोरपि बन्धापत्ति विस्मयनीयेति कारणम् ॥ ॥ ६२ ॥

निषीद लोलेति निबध्य सस्मितं
चकार कार्याणि चकोरलोचना ।
अनादरेण भ्रमयन्नुलूखलं
विनिर्ययौ विश्वपतिस्स्वमन्दिरात् ॥६३॥

निषीदेति ॥ चकोरलोचना सुन्दरी । किंचित्कोपारुणलोचनेति भाव । लोल चपलस्वभाव निषीद एवंबद्धस्तिष्ठेति सस्मित यथा तथा निबध्य तं नियम्य कार्याणि गृहप्रयोजनानि चकार कृतवती । स विश्वपति विष्णु अनादरेण अनास्थया । प्रयास विनेत्यर्थ । उलूखल भ्रमयन् तिर्यक् सञ्चारयन् स्वमन्दिरात् गृहोदरात् विनिर्ययौ बहिर्निर्जगाम ॥ ॥ ६३ ॥

उपेयिवांसौ ककुभद्रुमात्मतां
महीयसा नारदशापतेजसा ।
अतिष्ठतामद्धनि कैटभद्विषः
कुबेरपुत्रौ तरसैव रिङ्खतः ॥ ६४ ॥

उपेयिवांसाविति ॥ महीयसा गुरुतरेण नारदशापस्य नारदप्रयुक्तस्य निग्रहवचनस्य तेजसा प्रभावेन । ककुभद्रुमोऽर्जुनतरु । 'ककुभोऽर्जुन' इत्यमर । तदात्मता तत्स्वरूपता उपेयिवांसौ प्राप्तौ । 'उपेयिवाननाश्वाननूचानश्चे' ति निपातित । कुबेरपुत्रौ नलकूबरमणिग्रीवनामानौ धनदात्मजौ तरसा बलात्कारेणैव रिङ्खत सर्वाङ्गिनपदं गच्छत कैटभद्विष कृष्णस्य अद्धनि मार्गे अतिष्ठता स्थितौ ॥ ॥ ६४ ॥

स सन्निकृष्य स्थितयोः परस्परं
महीरुहोर्मध्यपथेन निस्सरन् ।

गतेन तिर्यक्त्वमुलूखलेन तौ
बभञ्ज दामोदरगन्धवारणः ॥ ६५ ॥

स इति ॥ सः तथा गच्छन् दामोदर एव गन्धवारणः मत्तगजः । तरुभञ्जनौचित्याद्वारणत्वेन निरूपणम् । परस्पर अन्योन्य सन्निकृष्य मम्मिळितौ भूत्वा स्थितयोः महीरुहोः ककुभद्रुमयोः मध्यपथेन मध्यमार्गेण निस्सरन् निर्गच्छन् तिर्यक्त्व तिरश्चीनता गतेन प्राप्तेन उलूखलेन कारणेन तौ द्रुमौ बभञ्ज भग्नवान् ॥ ॥ ६९ ॥

प्रपद्य दिव्यं वपुरंबरस्थितौ
विमुक्तशापौ धनदात्मजावुभौ ।
प्रणम्य भक्त्या पुरुषं पुरातनं
मुदाऽन्वितौ जग्मतुरन्तिकं पितुः ॥६६॥

प्रपद्येति ॥ धनदात्मजौ उभौ नळकूबरमणिग्रीवौ दिव्य वपुः आत्मरूप प्राप्य लब्ध्वा । अत्र हेतुमाह— विमुक्तशापौ शापाद्विमुक्तौ सन्तौ अम्बरस्थितौ गगनमुत्पत्य तत्र वर्तमानौ पुरातन पुरुष कृष्ण भक्त्या प्रणम्य मुदाऽन्वितौ सन्तोषयुक्तौ पितुः धनदस्य अन्तिक समीप जग्मतुः गतवन्तौ ॥ ॥ ६६ ॥

नन्दादयस्सपदि गोकुलवासिनस्ते
तद्भङ्गजन्म सुमहद्ध्वनितं निशम्य ।
अभ्येत्य भग्नपतितौ ककुभद्रुमौ तौ
तत्राक्षतं च ददृशुस्सरसीरुहाक्षम् ॥६७॥

नन्दादय इति ॥ नन्दादयः नन्दगोपप्रभृतयः ते गोकुलवासिन तयोः ककुभद्रुमयोः भङ्गात् जन्म यस्य तादृश सुमहत् अतिप्रवृद्ध ध्वनि

निशम्य आकर्ण्य सपदि शीघ्र अभ्येत्य पूर्व भग्नौ पश्चात् पतितौ तौ ककुभद्रुमौ तत्र तत्समीपे अक्षत अव्रणशरीर सरसीरुहाक्ष कृष्ण च ददृशु दृष्टवन्त ॥ ॥ ६७ ॥

नन्दस्समीक्ष्य दुरितानि बहूनि सद्यः
दत्वा गवामयुतमात्मसुताभिवृद्ध्यै ।
सम्मन्त्र्य बन्धुभिरपास्य पदं तदाशु
बृन्दावनं प्रति ययौ शकटैरसङ्ख्यैः ॥ ६८ ॥

नन्द इति ॥ नन्द बहूनि वृक्षपतनपूतनापातादीनि दुरितानि अमङ्गलानि समीक्ष्य सम्यग्विचार्य आत्मसुतस्य स्वपुत्रस्य अभिवृद्ध्यै अभ्युदयार्थं सद्यः ब्राह्मणेभ्य गवा अयुत दशसहस्र दत्वा बन्धुभि इष्टजनैस्सह सम्मन्त्र्य सम्यग्विमृश्य तत्पद तावद्वधि स्थित गोष्ठस्थान अपास्य त्यक्त्वा आशु शीघ्र असङ्ख्यै अपरिमिते शकटे वाहनविशेषे बृन्दावन प्रति ययौ यात ॥ ॥ ६८ ॥

गत्वा स गोकुलपतिर्मनसोऽनुकूले
कूले कलिन्ददुहितुर्विदधे पदानि ।
रेमे च तत्र पुरुहूतपदाभिरामे
लीलायितानि तनयस्य निरीक्षमाणः ॥

गत्वेति ॥ अथ अनन्तर गोकुलपति नन्द गत्वा मनसोऽनुकूले मनोरथसदृशे कलिन्ददुहितु कालिन्द्या कूले तीरस्थले पदानि वासस्थानानि विदधे निरचिनवान् । पुरुहूतपद इन्द्रलोक तद्वत् अभिरामे मनोहरे तत्र तस्मिन् प्रदेशे तनयस्य आत्मजस्य लीलायितानि क्रीडितानि निरीक्षमाण पश्यन् रेमे च विजहार च ॥ ॥ ६९ ॥

दधिनिर्मथने निरुद्यमा सा
नवनीतश्रपणे गवां च दोहे ।
सुतकेळिहृतेक्षणा यशोदा
क्षणकल्पानि निनाय वासराणि ॥७०॥

दधीति ॥ सुतस्य केळिभिः लीलाभिः हृते समाकृष्टे ईक्षणे चक्षुषी यस्या. तादृशी सती यशोदा दध्नः निर्मथने विलोडने नवनीतस्य नवोद्धृतस्य घृतस्य श्रपणे पाके।'श्रैपाक'इति धातुः। श्रपः 'मित्व'तिमित्वात् 'मिता ह्रस्व'इति ह्रस्वः । श्रपणमत्र पाकः । गवा दोहे क्षीरदोहने च निरुद्यमा निरुद्योगा । अत्र सर्वत्र उदासीनेति यावत् । वासराणि दिनानि क्षणकल्पानि प्रायशः क्षणसदृशानि निनाय गमयामास ॥ ॥ ७० ॥

अनुयाति जिघृक्षयेव नन्दे
तरसा रिङ्खणतत्परस्य विष्णोः ।
ललिताळकवेल्लितानि रेजुः
मुखमात्रेण मुहुर्निवर्तितानि ॥७१॥

अन्विति ॥ नन्दे जिघृक्षयेव गृहीतुमिच्छयेव अनुयाति अनुधावति सति तरसा द्रुततर रिङ्खणतत्परस्य गमनप्रवृत्तस्य विष्णो. बालकृष्णस्य ललित सुन्दर अलकाना चूर्णकुन्तळाना वेल्लन चलन येषु तादृशानि मुखमात्रेण केवल मुखेनैव न तु शेषावयवेन । मुहुः भूयः निवर्तनानि पश्चात् वलनानि रेजु' शुशुभिरे । गृहीतु कियदन्तरमासन्न इति द्रष्टुकामस्य शिशोः मुखपरिवर्तन अतिरमणीयमित्यर्थः ॥ ॥ ७१ ॥

अन्तरा विहतिमाङ्घ्रिरुत्थितैः
अस्फुटाक्षरपदाभिरुक्तिभिः ।

भंगुरैश्च परिरम्भणोद्यमैः
गोकुलं निखिलमन्वरञ्जयत् ॥ ७२ ॥

अन्तरेति ॥ सः बालकृष्णः अन्तरा मध्ये विहितिमद्भिः सञ्जातविघ्नैः उत्थितैः उत्थानव्यापारैः । उत्थातुमुद्युक्तस्य तत्र अशक्त्या निपतनैः विरम-णैर्वेति यावत् । अस्फुटानि अव्यक्तानि अक्षराणि पदानि च यासु । यद्वा अस्फुटाक्षराणि पदानि यासु ताभिः उक्तिभिः वाग्भिः भंगुरैः भङ्गशीलैः परिरम्भणमाश्लेषः तदर्थं उद्यमैः उत्साहैश्च निखिलं निश्शेषं गोकुलं तद्वा-सिजनं अन्वरञ्जयत् अनुरक्तं अकरोत् ॥ ॥ ७२ ॥

पश्य मातुलमिति प्रदर्शितं
यामिनीषु गगने यशोदया ।
आजुहाव ललितेन पाणिना
शीतभानुमरविन्दलोचनः ॥ ७३ ॥

पश्येति ॥ यामिनीषु रात्रिषु यशोदया अयि सुत गगने मातुलं प-श्येति प्रदर्शितं द्रष्टुं प्रयुक्तं शीतभानुं चन्द्रं अरविन्दलोचनः कृष्णः ललि-तेन विलासवता । विलासश्चात्र आह्वानसंज्ञा । तद्वता पाणिना आजुहाव आह्वानं कृतवान् । शिशून् प्रति चन्द्रो मातुल इति व्यपदिश्यत इत्ययं लोकसव्यवहार इति द्रष्टव्यम् ॥ ॥ ७३ ॥

आत्मनः प्रतिकृतिं विलोकयन्
मातृहस्तमणिदर्पणोदरे ।
एहि मित्र किमिहेति कौतुकात्
व्याजहार शतपत्रलोचनः ॥ ७४ ॥

आत्मन इति ॥ शतपत्रलोचन कृष्ण मातु हस्ते ध्रियमाणस्य मणिदर्पणस्य रत्नमुकुरस्य उदरेऽन्तर्भागे आत्मन स्वस्य प्रतिकृतिं प्रतिबिम्ब विलोकयन् पश्यन् हे मित्र सखे एहि अत्र आगच्छ। किं इह अस्मिन् मुकुरादरे किमर्थ वर्तसे इति एव कौतुकात् स्वसदृशरूपदर्शनकुतूहलात् व्याजहार अवदत् ॥ ॥ ७४ ॥

गौरवं कथमियं सहेत मे
मेदिनीति कृपयेव चिन्तयन् ।
माधवः पतनभीतिमुद्वहन्
मन्दमेव निदधे पदावलिम् ॥ ७५ ॥

गौरवमिति ॥ माधव पतनभीति द्रुतसञ्चारे स्खलन भवेदिति भय उद्वहन् पदावलि पादविन्यासपङ्क्तिं मन्दमेव शनैश्शनैरेव निदधे निहितवान् । अत्रोत्प्रेक्षते— इय मेदिनी भूमि मे गौरव गुरुत्व भारमित्यर्थ । कथ सहेत इति कृपया सहेतुना चिन्तयन्निवेति ॥ ॥ ७५ ॥

देवो निशासु हरिरङ्कगतो जनन्याः
शृण्वन् कथा मधुमुचो महताऽऽदरेण ।
मन्दं तदीयकरपल्लवताडितोरुः
सुष्वाप कुड्मलितलोचनपुण्डरीकः ॥

देव इति ॥ निशासु रात्रिषु जनन्या अङ्कगत मातु उत्सङ्गशायी देव हरि मधुमुच माध्वीं मुचन्ती । मधुरा इति यावत् । कथा रामायणादिचरितानि महताऽऽदरेण आस्तिक्येन शृण्वन् जननीमुखादित्यर्थ । तथा च प्रयुञ्जते— 'रामो नाम बभूव हु तदबला सीतेति हु तौ पितुर्वाचा पञ्चवटीवने विहरतस्तामाहरद्रावण । निद्रार्थं जननीकथामिति हरेर्हुङ्कारतश्शृण्वत सौमित्रे क्व धनुर्धनुर्धनुरिति व्यग्रा गिर पान्तु व इति।

मन्दं शनैः तदीयेन जननीसम्बन्धिना करपल्लवेन ताडितौ ऊरू यस्य तथा कुड्मलिते मुकुलिते लोचने एव पुण्डरीके यस्य तथा च सुष्वाप सुप्तवान् ॥ ॥ ७६ ॥

कौतुकेन पितुरग्रतो हरेः
धावतस्स्खलनमीक्षमाणया ।
मोदनिघ्नमनसा सलज्जया
न स्थितं न चलितं यशोदया ॥७७॥

कौतुकेनेति ॥ कौतुकेन क्रीडारसेन पितुः नन्दस्य अग्रे पुरोभागे धावतः द्रुतपदं गच्छतः हरेः स्खलनं अमार्गे पतनं ईक्षमाणया पश्यन्त्या यशोदया मोदनिघ्नमनसा प्रमोदायत्तचेतसा झटिति तद्ग्रहणसुखानुभवाभिलाषिण्येति यावत् । अत न स्थितं स्थातुं न पारितम् । सलज्जया भर्तृसन्निधानात् जातलज्जया तत. न चलितं उत्थातुमपि न पारितमित्यर्थः ॥७७॥

मुखडिण्डिमवादिना परीतो
मधुजित् कौतुकिना सुहृद्गणेन ।
अधिरोपितवारणेन्द्रभावः
ललिताभिर्गतिभिर्गृहेषु रेमे ॥ ७८ ॥

मुखेति ॥ मुखेन डिण्डिमं जर्झरवाद्यं वादयितुं ध्वानयितुं शीलमस्येति तादृशेन कौतुकिना कुतूहलवता सुहृद्गणेन समवयस्कबालबृन्देन परीतः परिवृतः मधुजित् हरिः अधिरोपितः अङ्गीकृतः वारणेन्द्रस्य गजेन्द्रस्य भावः स्वभावः येन तथा सन् ललिताभिः विलासयुक्ताभिः गतिभिः सञ्चारभेदैः गृहेषु गोमन्दिरेषु रेमे क्रीडितवान् ॥ ॥ ७८ ॥

अथाभिवृद्धिं प्रतिपद्यमानो
दध्यादिषु प्रीतिमुवाह शौरिः ।
तत्तत्प्रदानेन वशे विधातुं
आरेभिरे गोकुलयोषितस्तम् ॥ ७९ ॥

अथेति ॥ अथ अनन्तरं अभिवृद्धिं क्रमेण पुष्टिं प्रपद्यमानः गच्छन् शौरिः कृष्णः दध्यादिषु दधिक्षीरनवनीतादिगव्यद्रव्येषु प्रीतिं उवाह सतृष्णोऽभूत् । गोकुलयोषितः गोप्यः तत्तत्प्रदानेन तत्तदिष्टवस्तुप्रतिपादनेन तं बालं वशे विधातुं आत्माधीनं कर्तुं आरेभिरे प्रवृत्ताः ॥ ॥ ७९ ॥

कुरुष्व नृत्तं नवनीतमूल्यं
कृष्णेति साभ्यर्थनमूचिषीणाम् ।
व्रजाङ्गनानां स पुरस्सलीलं
उदञ्चयामास पदारविन्दम् ॥ ८० ॥

कुरुष्वेति ॥ हे कृष्ण नवनीतं मूल्यं वेतनं यस्य तादृशं नृत्तं कुरुष्व । तदेव नृत्तक्रियाफलमित्यात्मनेपदेन द्योत्यते । इति एवंप्रकारं साभ्यर्थनं याच्ञापूर्वं ऊचिषीणां उक्तवतीनां व्रजाङ्गनानां गोपीनां पुरतः सः कृष्णः सलीलं पद्मारविन्दमिव पदारविन्दं उदञ्चयामास उत्क्षिप्तवान् ॥८०॥

तासां मनःप्रीतिविधानदक्षे
तथा क्षणं तस्थुषि शार्ङ्गपाणौ ।
एकांघ्रिसंस्पर्शवियोगमात्रात्
अधन्यमात्मानममन्यतोर्वी ॥ ८१ ॥

तासामिति ॥ तासां गोपीनां प्रीतिविधाने मन्तोषोपपादने दक्षे नि-

दग्धे शार्ङ्गपाणौ कृष्णे क्षण अल्पकाल तथा तस्थुषि उत्क्षिप्तैकपाद एव स्थित सति उर्वी भूमि एकस्य अङ्घ्रे सस्पर्शेन य वियोग सञ्जात तन्मात्रादेव आत्मान अनन्य पुण्यरहित अमन्यत अवबुद्धवती ॥ ॥ ८१ ॥

उदञ्चितं तस्य विलोक्य पादं
वेधाः पुनर्विक्रमशङ्कितचेताः ।
कमण्डलुं पाणितलेन गृह्णन्
अभ्युद्यतोऽभूदवनेजनाय ॥ ८२ ॥

उदञ्चितमिति ॥ वेधा ब्रह्मा तस्य पाद उदञ्चित उत्क्षिप्त विलोक्य पुनरपि विक्रम त्रिविक्रमप्रस्ताव विशङ्कितु शील अस्येति तादृशचेतास्सन् पाणितलेन कमण्डलु कुण्डिका गृह्णन् धारयन् अवनेजनाय चरणक्षालनाय । 'विष्णो पदाम्बुज दिव्य विक्रमाय समुत्थितम् । क्षालयामास वि रिचित् कुण्डतोयेन पद्मभू'रितिवत् तदानामपि तत्कालागमनशङ्कया तत्पदधावनाय अभ्युद्यत उद्युक्तोऽभूदित्यर्थ ॥ ॥ ८२ ॥

नृत्तामृतं गोकुलयोपितस्तत्
कृष्णस्य नेत्राञ्जलिभिः पिबन्त्यः ।
प्रीतिप्रकर्षस्तिमितैर्मनोभिः
आलेख्ययोपित्प्रतिमा बभूवुः ॥ ८३ ॥

नृत्तेति ॥ कृष्णस्य तत् तादृश नृत्तमेव अमृत नेत्रैरेव अञ्जलिभि पिबन्त्य गोप्य प्रीतिप्रकर्षेण प्रमोदातिशयेन स्तिमितै निश्चलै मनोभि उपलक्षितास्सत्य आलेख्ययोपित्प्रतिमा चित्रलिखितस्त्रीरूपतुल्या बभूवु ॥

विदुर्न तद्दर्शनपारवश्यात्
दातुं करस्थं नवनीतमेकाः ।

विस्रस्य भूमौ पतितं तदन्याः
न मेनिरे पाणिपयोरुहेभ्यः ॥ ८४ ॥

विदुरिति ॥ एकाः काश्चन गोप्यः तस्य कृष्णस्य दर्शने यत् पारवश्यं तस्माद्धेतोः करस्थं नवनीतं तदर्पणाय करोद्गतं तत्करोद्गतं घृतं दातुं तस्मै प्रतिपादयितुं न विदुः नाजानन् । अन्याः गोप्यः पाणिसरोरुहेभ्यः करेभ्यः सकाशात् विस्रस्य विगलनं कृत्वा भूमौ पतितं नवनीतं न मेनिरे नावाबुध्यन्त । अत्रापि दर्शनपारवश्यमेव हेतुः ॥ ॥ ८४ ॥

अजस्रमेवं भवनेषु तासां
बभ्राम कृष्णो नवनीतभिक्षाम् ।
पुरा किलान्यैरनिवर्तनीया
निवर्तिता येन हरस्य भिक्षा ॥ ८५ ॥

अजस्रमिति ॥ पुरा पूर्वं अन्यैः विरिञ्चिपुरन्दरादिभिः अनिवर्तनीया निवर्तयितुं विरमयितुं अशक्या हरस्य परमेश्वरस्य भिक्षा भिक्षाटनं येन विष्णुना निवर्तिता विरमिता तेनैव उपसंहारिता किलेति प्रसिद्धिः । 'पूरयित्वा हरिश्शंभोः क्षतजस्राङ्गुलिशोणितैः । कपालं त्याजयामास तेनैव स कपालिने'ति श्रूयते ॥ तादृशः सः कृष्ण एव उक्तप्रकारेण अजस्रं अनवरतं तासां गोपिकानां भवनेषु नवनीतभिक्षां नवनीतरूपां भिक्षाम् । आदायेति शेषः । बभ्राम सञ्चचार । अहो आश्चर्यमिति भावः ॥ ॥८५॥

धिग्याचनां चौर्यभवस्य भूया-
नस्त्यंहसो निर्हरणाभ्युपायः ।
मत्वेति नूनं नवनीतचौर्ये
मधोर्निहन्ता मतिमाबबन्ध ॥ ८६ ॥

धिगिति ॥ याचना याञ्चा धिक् । अतिदैन्यास्पदमिति भावः । यदाह— 'देहीत्युक्तेर्जीवनाशो वरीया'निति । चौर्यभवस्य चौर्यात् जायमानस्य अहसः दुरितस्य निर्हरणाय प्रशमनाय अभ्युपायः भूयान् बहुतरः अस्ति विद्यते ॥ तथाचोक्तम्— 'अत्यागिना धन मुष्णन् ये ददाति तदर्थिने । तस्य मोषणजो दोषो दानधर्मेण शाम्यती'ति ॥ इति एव मत्वा मघोः निहन्ता कृष्ण. नवनीतस्य चौर्ये मोषणे विषये मति आबबन्ध बुद्धि दृढीकृतवान् । नून ध्रुवम् । लुब्धाभ्यः गोपिकाभ्यः नवनीत मुषित्वा तद्दोषनिर्हरणाय मार्जारेभ्योऽपि तत् प्रदास्यामीति निश्चित्य एव आरब्धवानयमिति अभिप्रायः ॥ ॥ ८६ ॥

निर्वाप्य दीपं मुखमारुतेन
हैयङ्गवीनं निशि हर्तुमिच्छन् ।
कृष्णः कटीभूपणरत्नभासा
विहन्यमानो विषसाद भूयः ॥ ८७ ॥

निर्वाप्येति ॥ निशि रात्रौ दीप मुखमारुतेन मुखानिलेन निर्वाप्य प्रशमय्य हैयङ्गवीन पूर्वेद्युः दुग्धे पयसि सभूत घृतम् । तत्तु 'हैयङ्गवीनं यद्धो गोदोहोद्भव घृत'मित्यमरसिंहः ॥ हर्तु चोरयितु इच्छन् कृष्णः कटीभूषणस्य काञ्च्या' सबन्धिन' रत्नस्य भासा दीप्त्या विहन्यमानः विघ्न प्राप्तः भूयः पुनः विषसाद निरुद्योगः स्थित' । दीपे निर्वापितेऽपि रत्नद्युतेः प्रकाशः दुर्निवार इति किंकर्तव्यतामूढः स्थितवानित्यर्थः ॥ ॥ ८७ ॥

निपीडयन्नग्रपदेन पृथ्वीं
उन्नम्य देहं भृशमूर्ध्वबाहुः ।
पयोघटस्पर्शमनश्नुवानः
त्रिविक्रमोऽभूत्परिहासपात्रम् ॥ ८८ ॥

निपीडयन्निति ॥ त्रिविक्रमः विष्णुः अग्रपदेन पादाग्रेण पृथ्वीं निपीडयन् नितरां अवष्टम्भयन् देहं भृशं अन्यर्थं तन्नम्य उत्तानीकृत्य ऊर्ध्वबाहुः उत्क्षिप्तबाहुः एवं कृतप्रयासः पयोघटस्य दुग्धकलशस्य स्पर्शं अनश्नुवानः अलभमानस्सन् परिहासस्य पात्रं स्ववयस्यानां अपहासास्पदं अभूत् । त्रिविक्रम इति लोकत्रयव्यापकशरीरोऽपि अत्र कुण्ठोऽभदित्याश्चर्यमिति भावः ॥ ॥ ८८ ॥

नियमितश्वसितो निभृतैः पदैः
निशि कथञ्चन गर्भगृहं गतः ।
स तु भयादसमाप्तमनोरथः
निववृते नवनीतहरो हरिः ॥ ८९ ॥

नियमितेति ॥ सः हरिः निशि रात्रौ नियमितश्वसितः निरुद्धश्वासवातः निभृतैः निश्शब्दैः पदैः पादविन्यासैः कथञ्चन यत्नेन गर्भगृहं अन्तर्भवनं गतः प्राप्तः नवनीतहरः नवनीतं मुष्णन् भयात् गोप्यः आयास्यन्तीति भीत्या असमाप्तः असपूर्णः मनोरथः नवनीतभक्षणाभिलाषः यस्य तथासन्नेव निववृते गर्भगृहात् बहिः निर्गतः ॥ ॥ ८९ ॥

हर्तुं हरेर्व्यवसितस्य घने निशीथे
भूषारवश्रुतिभयात् व्रजतोऽतिमन्दम् ।
अन्तर्गृहस्य नवनीतवतः प्रवेशात्
प्रागेव हन्त पथि सा रजनी विभाता ॥

हर्तुमिति ॥ घने निबिडे निशीथे अर्द्धरात्रे हर्तुम् । नवनीतमिति शेषः । व्यवसितस्य उद्युक्तस्य भूषारवस्य भूषणशिञ्जितस्य श्रुतेः श्रवणात् यत् भयं गोप्यः श्रोष्यन्तीति भीतिः तस्माद्धेतोः अतिमन्दं शनैश्शनैः व्रजतः गच्छतः । पदे पदशतं विन्यस्य सञ्चरत इत्यर्थः । हरेः कृष्णस्य । नव-

नीतं अस्त्यस्मिन्निति नवनीतवतः गृहस्य अन्तः प्रवेशात् अन्तः प्राप्तेः प्राक् पूर्वं पथ्येव मार्ग एव सा रजनी यस्यामनेनेद व्यवसितं सा रात्रिः विभाता प्रभातत्वं प्राप्ता । हन्तेति खेदे । 'हन्त खेदानुकम्पाया'मित्यमरः । कष्टं वृथा प्रयतितं भगवतेति कवेरनुकम्पायां वा ॥ ॥ ९० ॥

गोपीसमागमभिया च तृषा च गुर्व्या
पातुं च हातुमपि गोपगृहेष्वजानन् ।
आद्वारमादधिघटं च गतागतानि
कुर्वन् सरोजनयनः श्रममेव लेभे ॥ ९१ ॥

गोपीति ॥ गोपीनां समागमात् आगमात् सकाशात् भिया भीत्या च गुर्व्या तृषा तृष्णया च पातुं दधि विहातुं त्यक्तुमपि अजानन् अशक्नुवन् सरोजनयनः कृष्णः गोपगृहेषु आद्वारं द्वारावधि आदधिघटं दधिघटावधि च गतागतानि गमनागमनं च कुर्वन् सन् श्रममेव आलस्यमेव लेभे । न तु दधि लब्धवान् ॥ ॥ ९१ ॥

भित्तिषु प्रतिशरीरदर्शनात्
शङ्कितस्स नवनीतनिस्पृहः ।
किञ्चिदन्यदिव तत्र मार्गयन्
निर्जगाम मणिमन्दिरोदरात् ॥ ९२ ॥

*भित्तिष्विति* ॥ सः कृष्णः भित्तिषु कुड्येषु । मणिमन्दिरस्य मणिमयेषु कुड्येष्वित्यर्थः । प्रतिशरीरस्य आत्मप्रतिबिम्बस्य दर्शनाद्धेतोः शङ्कितः कश्चिदिहास्तीति शङ्कावान् नवनीते निस्पृहः निराकाङ्क्षः अन्यत् किंचिद्वस्तु तत्र मार्गयन् अन्विच्छन्निव मन्दिरस्य उदरात् निर्जगाम निर्गतः ॥ ॥ ९२ ॥

जिहीर्षुरन्तर्भवनेषु गोरसं
दिनान्यनैषीत्तदुपायचिन्तया ।
स जागरूकश्च निनाय यामिनीं
मनोहराभिर्हरणप्रवृत्तिभिः ॥ ९३ ॥

जिहीर्षुरिति ॥ स कृष्ण अन्तर्भवनेषु भवनोदरेषु गोरस गव्य जिहीर्षु हर्तुमिच्छु तस्य गोरसहरणस्य उपायचिन्तया । उपायो नाम प्राप्तिसाधनम् । तद्विषयविचारेणेत्यर्थ । दिनानि दिवसानि अनैषीत् गमयामास । जागरूक विनिद्रस्सन् मनोहराभि मनसोऽनुकूलाभि हरणप्रवृत्तिभिश्चोरणव्यापारै यामिनीं रात्रिं ता निनाय नीतवान् । दिवा मनसा रात्रौ क्रियया चेति गव्यचोरणकृतानन्द दर्शितम् ॥ ॥ ९३ ॥

दृष्टेऽपि तत्सविधसञ्चरणे स तत्र
वक्तुं निमित्तमुचितं कृतनिश्चयस्सन् ।
अभ्यर्ण एव निदधे दधिभाजनस्य
लीलायितोपकरणानि निजानि शौरिः ॥

दृष्ट इति ॥ स शौरि दधिभाजनस्य दधिकुम्भस्य अभ्यर्णे समीप एव निजानि आत्मीयानि लीलायितस्य क्रीडाया उपकरणानि लोष्टाश्मखण्डदारुपुत्रिकाप्रभृतीनि साधनानि निदधे निहितवान् । तत्र निधानस्य प्रयोजनमाह— दृष्टेऽपीत्यादिना ॥ तत्सविधे समीपे यत् सचरण सचार तस्मिन् दृष्टे येन केनापि अवलोकिते सत्यपि तत्र उचित युक्त निमित्त कारण लोष्टादिक आदातु आगतोऽस्मीत्येवमादिप्रयोजनमित्यर्थः । यद्वक्तु कृतनिश्चय कृतव्यवसायस्सन् एव कृतवानित्यर्थ ॥ ॥ ९४ ॥

वहन् गृहीतो नवनीतमच्युतो
भयेन पारिप्लवनेत्रपङ्कजः ।

**पदा लिखन् भूमिमवाङ्मुखस्स्थितो**
**जहार चेतोऽपि च गोपयोषिताम् ॥**

वहन्निति ॥ नवनीतं वहन् करे धारयन् । मुषितं नवनीतं हस्ते निधाय गच्छन्नित्यर्थः । गृहीतः गोपयोषिद्भिः क गच्छसि चोर ? इति बलात् हस्ते गृहीतः अच्युतः कृष्णः भयेन हेतुना पारिप्लवे चंचले नेत्रे पङ्कजे इव यस्य तादृशः अवाङ् मुखः अधोमुखः अवचनमुख इति वा । पदा पदाग्रेण भूमिं लिखन् स्थितस्सन् गोपयोषितां गोपीनां चेतोऽपि हृदयमपि जहार हृतवान् । न केवलं नवनीतमेवेत्यर्थः ॥ ॥९१॥

**शपे पितृभ्यामितऊर्ध्वमेवं**
**नाहं विधास्ये नवनीतचौर्यम् ।**
**विनिश्वसन्नित्यभिधाय कृष्णो**
**जहार मातुश्च पितुश्च चेतः ॥ ९६ ॥**

शप इति ॥ पितृभ्या शपे पितरावुद्दिश्य शपथं करोमि । किं तदिति चेत् अत्राह— इतऊर्ध्वं अस्माद्दिनादुपरि अहं एवं यथेतःपूर्वं तद्वत् नवनीतस्य चौर्यं मोषणं न विधास्ये न करिष्यामि इति एवंप्रकारं अभिधाय उक्त्वा विनिश्वसन् दीर्घनिश्वासं कुर्वन् कृष्णः मातुश्च पितुश्च चेतः जहार हृदयं आहृतवान् ॥ ॥ ९६ ॥

**एहि सद्म तनयेति सादरं**
**याचितोऽपि स मुहुर्यशोदया ।**
**आननेन नवनीतगन्धिना**
**नाजगाम विहरन्निवाच्युतः ॥ ९७ ॥**

एहीति ॥ सः अच्युतः हे तनय ? सद्म एहि गृहं आगच्छ इति एवं

प्रकारं यशोदया सादरं आदरसहितं यथा तथा मुहुः बहुशः याचितः अ-र्थितोऽपि नवनीतगन्धिना नवनीतसुगन्धः अस्मिन्नस्तीति तादृशेन आन-नेन मुखेन उपलक्षितः नाजगाम नागतवान् । नवनीतगन्धेन एषा मां नवनीतचोरमनुमास्यतीति मत्वेति यावत् । विहरन् क्रीडन्निव । हेत्वर्थक-शता । विहरणरूपं हेतुमाविश्येत्यर्थः ॥ ॥ ९७ ॥

हृतं नवं मे नवनीतमालयात्
हृतं घृतं मे दधि मे हृतं निशि ।
इति प्रभाते वचनानि योषिताम्
उवाह शृण्वन्न मुखे स विक्रियाम् ॥९८॥

हृतमिति ॥ निशि रात्रौ मे आलयात् नवनीतं नवोद्धृतं सर्पिः । 'स र्पिर्नवनीतं नवोद्धृत'मित्यमरः । नवमिति विशेषणं तु गोबलीवर्दन्यायेन द्रष्टव्यम् । हृतं चोरितम् । मे घृतं मे दधि हृतम् । इति एवप्रकारं प्रभा-ते प्रातः योषितां गोपीनां वचनानि शृण्वन् सः कृष्णः मुखे विक्रियां वि-कारं न उवाह न धृतवान् । अन्येन कृते किं ममेत्यभिनीय तूष्णीं स्थि-तवानित्यर्थः ॥ ॥ ९८ ॥

पुत्रं कुलस्य भुवनस्य च रक्षितारं
अभ्यर्थितोऽपि भगवानरविन्दनाभः ।
त्वां मे ददौ विधिवशात् भुवनैकचोर-
मित्याह कोपमभिनीय सुतं यशोदा ॥९९॥

पुत्रमिति ॥ कुलस्य मद्वंशस्य भुवनस्य लोकस्य च रक्षितारं त्रा-तारं पुत्रं अभ्यर्थितः याचितस्सन् भगवान् अरविन्दनाभः महाविष्णुः वि-धिबलात् विधिशक्त्या भुवने एकचोरं प्रधानतस्करं त्वां मे ददौ दत्तवान् । भुवनस्य रक्षितारं अभ्यर्थितः भुवनस्य मोष्टारं दत्तवान् । ददाविति दान-

क्रियायाः स्वस्य परोक्षतयोल्लेखः । इति एवंप्रकारं यशोदा कोपं अभिनीय नाटयित्वा । न तु वास्तवकोपेन । सुतं आह उक्तवती । आहेत्यव्ययम् ॥

स सान्त्वनेन प्रतिपादनेन
भेदेन तीव्रेण च तर्जनेन ।
निबध्य पृष्टोऽपि मुहुर्जनन्या
नाङ्गीकरोति स्म हरिस्स्वचौर्यम् ॥१००॥

स इति ॥ सः हरिः जनन्या यशोदाया सान्त्वनेन साम्ना प्रतिपादनेन दानेन भेदेन भेदोपायेन तीव्रेण क्रूरेण तर्जनेन भर्त्सनरूपेण दण्डेन च । चतुर्भिः उपायैरित्यर्थः । मुहुः बहुशः निबध्य निष्फल्य पृष्टः अनुयुक्तोऽपि स्वस्य आत्मनः चौर्यं स्वकर्तृकं मोषणं नाङ्गीकरोतिस्म नाङ्गीकृतवान् ॥ ॥१००॥

संरक्षणाय जगतामवतीर्य पृथ्व्यां
गोपालसद्मसु हरत्यखिलं मुकुन्दः ।
इत्थं निशम्य परिहासवचस्सुराणां
अन्तर्जहास भगवानरविन्दनाभः ॥१०१॥

संरक्षणायेति ॥ जगतां लोकानां संरक्षणाय त्राणं कर्तुं पृथ्व्यां भूमौ अवतीर्य अवतीर्णस्सन् मुकुन्दः गोपालानां सद्मसु भवनेषु अखिलं समस्तं वस्तु हरति मुष्णाति । इत्थं एवंविधं सुराणां परिहासवचः प्रहसनवचनं निशम्य श्रुत्वा भगवान् अरविन्दनाभः अन्तर्मनसि जहास स्मितवान् । युक्तमिदं मदद्रोहवस्य पतत्सहारोऽपि मत्क्रीडितमेवेति सम्भावनं हासहेतुः ॥ ॥ १०१ ॥

कृष्णस्य केलिसमरेक्षणकौतुकेन
गोपीषु मुक्तभवनासु बहिःस्थितासु ।

मित्रैः पराजित इव द्रुतमेत्य गेहं
बध्वा कवाटमहरन्नवनीतमन्तः ॥ १०२ ॥

कृष्णस्येति ॥ कृष्णस्य केळिसमरं बालकैस्सह क्रीडायुद्धम् । तस्य ईक्षणेन कौतुकेन औत्सुक्येन हेतुना गोपीषु मुक्तभवनासु त्यक्तगृहासु बहिः बाह्याङ्कणे स्थितासु सतीषु कृष्णः मित्रैः सुहृद्भिः पराजित इव भङ्गं प्रापित इव द्रुतं शीघ्रं गेहं गृहोदरं एत्य प्रविश्य कवाटं बध्वा । अन्यथा अमी इह आगत्य मां प्रहरिष्यन्तीति भयेनेति भावः । नवनीतं अहरत् । हत्वा भक्षितवानिति यावत् ॥ ॥ १०२ ॥

त्रिभुवनमहनीयैरभ्युपायैरसह्यैः
निखिलमिति स मुष्णन् गोकुलं नन्दसूनुः ।
अरमत सवयोभिस्तत्र गोपालपुत्रैः
अपर इव शशाङ्कः प्राणिनां प्रीतिहेतुः ॥ १०३ ॥

इति सुकुमारकृतौ कृष्णविलासकाव्ये
तृतीयस्सर्गः ॥

त्रिभुवनेति ॥ त्रिभुवनेन भुवनत्रयवासिजनेन महनीयैः पूजनीयैः असह्यैः अपरिमेयैः अभ्युपायैः इति एवंप्रकारं गोकुलं गोष्ठं निखिलं वस्तु मुष्णन् । 'अकथितं चे'ति मुष्णातेः द्विकर्मकत्वम् । गोकुलादित्यर्थः । सः नन्दसूनुः तत्र गोकुले सवयोभिः तुल्यवयस्कैः गोपालपुत्रैः सहेत्यर्थः । अरमत क्रीडितवान् । अपरः अन्यः शशाङ्कः चन्द्र इव प्राणिनां शरीरिणां प्रीतिहेतुः प्रमोदकारणमिति सकलं अविकलं मङ्गळम् । मालिनी नाम वृत्तमिदम् । 'ननमयययुतेयं मालिनी भोगिलोकै'रिति ॥ १०३ ॥

इति श्रीरामपाणिवादविरचितायां विलासिन्याख्यायां कृष्णविलासव्याख्यायां
तृतीयस्सर्गः ॥

---

॥ श्रीरस्तु ॥

## ॥ अथ चतुर्थस्सर्गः ॥

स रोहिणीसूनुनिबद्धरागः
सतां शरण्यस्तमसोऽपहर्ता ।
मनोहरो बाल इवौषधीशो
दिनेदिने पोपमियाय शौरिः ॥ १ ॥

स इति ॥ स ताद्दशक्रीडापरश्शौरि वासुदेव रोहिणीसूनौ बलभद्रे नुधे च निबद्धराग नितरामारूढ स्नेहोयस्य । सता सज्जनाना शरण्यश्शरणार्ह । तमस अज्ञानस्य तिमिरस्य च अपहर्ता निरासक । मनोहर बाल ओषधीश चन्द्र इव दिनेदिने प्रतिदिनं पोपमियाय वृद्धिं प्राप्तवान् । श्लेषानुगृहीत उपमालङ्कार ॥ ॥१॥

त्यक्त्वा हरिस्स्तैन्यकृतापवादं
तच्छैशवं प्राप्य दशान्तरं सः ।
मन्ये तदंहःपरिमार्जनाय
गवां परित्राणसमुद्यतोऽभूत् ॥ २ ॥

त्यक्त्वेति ॥ स हरि स्तैन्येन चौर्येण कृत उत्पादितमपवाद अपकीर्तिं त्यक्त्वा तत्ताद्दश शैशव दशान्तर अवस्थाविशेषं प्राप्य गवा परित्राणे पालने समुद्यत उद्युक्त अभूत् । तदह इत्यत्र तच्छब्देन स्तैन्य परामृश्यते । स्तैन्येन यदहोदुरित सञ्जात तस्य परिमार्जनाय तत् प्रमार्ष्टुमिति [illegible] अह समर्थयामि । यदाहु—'गवा शुश्रूषणात् पाप सर्वमपि विनश्यती'ति ॥

पुत्रे तथोद्योगिनि नन्दगोपो
गोपालपुत्राननुनीय सर्वान्।
त्रातुस्त्रयाणामपि विष्टपानां
संरक्षणे तस्य समादिदेश ॥ ३ ॥

पुत्र इति ॥ पुत्रे तथोद्योगिनि तथा गोत्राणकृतोत्साहे सति नन्दगोपः विष्टपानां भुवनानां त्रयाणामपि त्रातुः रक्षितुः तस्य पुत्रस्य संरक्षणे सम्यक्पालने विषये सर्वान् गोपालपुत्रान् अनुनीय अनुसरणपूर्वकं समादिदेश नियुक्तवान् ॥ ॥३॥

मात्रा कृतस्वस्त्ययनः प्रभाते
पित्रा परिष्वज्य चिरं विसृष्टः।
सहैव रामेण समग्रहर्षः
विनिर्ययौ विश्वपतिर्वनाय ॥ ४ ॥

मात्रेति ॥ विश्वपतिः कृष्णः प्रभाते प्रातःकाले मात्रा जनन्या कृतस्वस्त्ययनः कृताशीर्वादः पित्रा जनकेन चिरं परिष्वज्य दीर्घकालमालिङ्ग्य विसृष्टः अनुमतगमनः समग्रहर्षः संपूर्णमोदस्सन् रामेणसहैव वनाय वनं गन्तुं विनिर्ययौ प्रस्थितवान् ॥ ॥४॥

स प्रातराशी व्यतिषक्तपाणिः
यष्टिं वहन्नंसविषक्तशृङ्गः।
विमुच्यतां गौरिति संभ्रमेण
गच्छन् प्रतिद्वारमवोचदुच्चैः ॥ ५ ॥

स इति ॥ स कृष्ण प्रातरशितु शीलमस्येति तथा । व्यतिषक्तपाणि क्षाळितकरतल यष्टिं वहन् वेत्रदण्डमुद्वहन् असविपक्तशृङ्ग स्कन्धदेशर्पितवाद्यविशेष द्वार प्रति गच्छन् सभ्रमेण त्वरया गौर्विमुच्यताम् । जातावेकवचनम् । गावो विमुक्तबन्धा क्रियन्तामित्यर्थ । इति एवप्रकार उच्चैरवोचत् उक्तवान् ॥ ॥ ५ ॥

निशम्य तस्य ध्वनिमूर्ध्वकर्णाः
विलूनपाशा भृशमुत्सुकिन्यः ।
वत्सानपि स्वाननपेक्ष्य गावः
ससंभ्रमं निर्ययुरालयेभ्यः ॥ ६ ॥

निशम्येति ॥ गाव तस्य विश्वपते ध्वनिं शब्द निशम्य आकर्ण्य ऊर्ध्वकर्णा विलूनपाशा छिन्नपाशा भृश अत्यर्थ उत्सुकिन्य औत्सुक्यशालिन्य स्वानात्मीयान् वत्सान् तर्णकानपि अनपेक्ष्य अविचार्य ससभ्रम सत्वर आलयेभ्य निवासस्थानेभ्य निर्ययु निर्गता ॥ ॥ ६ ॥

गत्वा पुरस्ताद्गजराजगामी
गोष्ठं गरिष्ठो गुणमण्डलेन ।
अपूरयन्मित्रगणागमार्थं
पित्रोरभीष्टेन सहैव शृङ्गम् ॥ ७ ॥

गत्वेति ॥ गजराज गजश्रेष्ठ इव गन्तु शीलमस्येति तथा । गुणाना शौर्यविनयगाम्भीर्यादीना मण्डलेन समूहेन गरिष्ठ गरीयान् पुरस्तात् पूर्वमेव गोष्ठ गोस्थान गत्वा मित्रगणाना सुहृत्सङ्घाना आगमार्थ आगमप्रयोजन पित्रो जननीजनकयो अभीष्टेन अभिमतेन सहैव शृङ्ग अपूरयत् । शब्दितवान् । अभीष्टपक्षे वर्धितवान् ॥ ॥ ७ ॥

नभस्स्पृशा कर्णपथं गतेन
तेनैव संज्ञागवलस्वनेन ।
आदाय तत्तत्परिबर्हजातं
सद्यो गृहेभ्यस्सुहृदो निरीयुः ॥ ८ ॥

नभ इति ॥ सुहृदः वयस्याः नभः आकाशं स्पृशतीति तादृशेन कर्णपथं श्रोत्रमार्गं गतेन प्राप्तेन तेन संज्ञागवलस्य संज्ञार्थस्य शृङ्गस्य स्वनेन नादेनैव हेतुना तत्तत् अनेकप्रकारं परिबर्हजातं पदार्थजालं आदाय गृहीत्वा सद्यः तत्क्षणमेव गृहेभ्यः निरीयुः निर्गताः ॥ ॥ ८ ॥

गवां खुरन्याससमुद्भवेन
विषाणसङ्घट्टनजन्मना च ।
प्रसर्पता दिक्षु महास्वनेन
घोषः क्षणं घोषमयो बभूव ॥ ९ ॥

गवामिति ॥ गवां खुरन्यासात् खुरनिक्षेपणात् समुद्भवः यस्य तादृशेन विषाणानां शृङ्गाणां सङ्घट्टनात् मिथः समाघातात् जन्म यस्य तादृशेन दिक्षु प्रसर्पता व्याप्नुवता महता स्वनेन शब्देन क्षणं अल्पकालं घोषः गोष्ठं घोषमयः शब्दमयः बभूव सञ्जातः ॥ ॥ ९ ॥

प्रधावनैरुत्प्लुतिभिस्सुदूरं
मिथो बलात् ग्राहविमोचनैश्च ।
समागतैस्तत्र समं सुहृद्भिः
बहुप्रकारं विजहार शौरिः ॥ १० ॥

प्रधावनैरिति ॥ तत्र गोष्ठे समागतैः संप्राप्तैः सुहृद्भिः वयस्यैः समं

शौरिं कृष्णः प्रधावनैः पलायनैः सुदूरं उच्चैस्तरां उत्प्लुतिभिः उत्पतनैः मिथः अन्योन्यं बलाद्ग्राहैः बलेन ग्रहणैः विमोचनैः पुनस्त्यजनैश्च बहुप्रकारं अनेकविधं निजहार क्रीडितवान् ॥ ॥ १० ॥

परेण हर्षेण पुराणपुंसः
संक्रीडमानस्य समं सुहृद्भिः ।
पवित्रयामास पदाम्बुजोत्थिता
करीषधूलिः ककुभां मुखानि ॥ ११ ॥

परेणेति ॥ सुहृद्भिः समं परेण उत्कृष्टेन हर्षेण प्रमोदेन हेतुना संक्रीडमानस्य विहरतः पुराणस्य पुंसः कृष्णस्य पदाम्बुजात् उत्थिता करीषस्य धूलिः शुष्कगोमयस्य रेणुः । 'गोविड् गोमयमस्त्रियाम् । तत्तु शुष्कं करीषं स्या'दित्यमरः । ककुभां मुखानि दिङ्मुखानि पवित्रयामास पवित्राणि चकार ॥ ॥ ११ ॥

महर्षयस्तत्र महानुभावाः
गृहीतरूपान्तरदुर्निरूपाः ।
भवाग्निसन्तापहरे ममज्जुः
पदोत्थिते तस्य परागपूरे ॥ १२ ॥

महर्षय इति ॥ महानुभावा महाप्रभावा तत्र महर्षयः तत्रत्याः मुनयः भवाग्निसन्तापहरे संसाररूपस्य अग्नेः सकाशात् यः सन्तापः तं हरति शमयतीति तादृशे तस्य कृष्णस्य पदाभ्यां उत्थिते उद्भूते परागपूरे पांसुमध्ये ममज्जुः मग्ना । अत एव गृहीतेन स्वीकृतेन रूपान्तरेण अन्येन रूपेण पांसुपरिवृतत्वात् यथापूर्वं अनवस्थितेनेत्यर्थः । दुर्निरूपाः दुःखेन द्रष्टुमशक्याः । इदमेव अमीषाञ्च महानुभावत्वमिति द्रष्टव्यम् ॥ ॥ १२ ॥

प्रहर्षमालोकयतां जनानां
क्रीडाभिरापाद्य मनोहराभिः ।
उत्थापयामास स चित्कृतेन
गोष्ठे हरिर्गोसमजं शयानम् ॥ १३ ॥

प्रहर्षमिति ॥ स हरिः कृष्णः आलोकयतां पश्यतां जनानां मनोहराभिः क्रीडाभिः विहारैः प्रहर्षं प्रमोदम् आपाद्य निधाय गोष्ठे शयानं गवां समजं समूहम् । 'समुदोरजः पशुषु' इत्यच् । चित्कृतेन शब्दविशेषेण उत्थापयामास उत्थानम् अकारयत् ॥ ॥ १३ ॥

तस्मिन् गवां पालनकौतुकेन
वनाय निर्गच्छति दैत्यशत्रौ ।
ययुः प्रियाख्यानचिकीर्षयेव
दिवाकृतो दिग्वलयं मयूखाः ॥ १४ ॥

तस्मिन्निति ॥ तस्मिन् दैत्यशत्रौ कृष्णे गवां पालने कौतुकेन कुतूहलेन वनाय निर्गच्छति प्रस्थिते सति दिवाकृतः सूर्यस्य मयूखाः रश्मयः दिग्वलयं दिक्चक्रं ययुः प्राप्ताः । अत्रोत्प्रेक्षते— प्रियाख्यानं प्रियनिवेदनं तत्कर्तुम् इच्छयेवेति । युगमात्रोद्गतस्य सूर्यस्य किरणानां दिक्षु प्रसरणस्य प्रियाख्यानफलकतया उत्प्रेक्षणात् फलोत्प्रेक्षेयम् ॥ ॥ १४ ॥

कूलद्रुमाणां कुसुमानि धून्वन्
कर्षन् पयश्शीकरमण्डलानि ।
कृष्णं कृतानेकविहारखिन्नं
यान्तं सिषेवे यमुनासमीरः ॥ १५ ॥

कूलेति ॥ यमुनासमीरः यमुनातरङ्गानुसारी मारुतः कूलद्रुमाणां तीरवृक्षाणां कुसुमानि धून्वन् कम्पयन् पयश्शीकराणां जलकणानां मण्डलानि निकरान् कर्षन् आकृष्य आनयन् क्रमेण अनेकेन बहुना विहारेण क्रीडितेन हेतुना खिन्नं श्रान्तं यान्तं कृष्णं सिषेवे आनुकूल्येन सेवितवान् ॥

परस्य पुंसः पदपङ्कजाभ्यां
प्रवेक्ष्यतो गोकुलपालनाय ।
चकार नीहारहरैर्मयूखैः
प्रवेशयोग्यानि वनानि भानुः ॥ १६ ॥

परस्येति ॥ भानुः सूर्यः गोकुलस्य गोबृन्दस्य पालनाय तत् कर्तुं पदपङ्कजाभ्यां पादप्रचालनेनेव प्रवेक्ष्यतः प्रवेष्टुं प्रक्रान्तस्य परस्य पुंसः कृष्णस्य नीहारहरैः शैत्यप्रशान्तिकरैः मयूखैः वनानि प्रवेशस्य योग्यानि समुचितानि चकार कृतवान् ॥ ॥ १६ ॥

प्रेम्णा परित्यक्तुमशक्नुवन्तं
बद्धाञ्जलिं बन्धुजनं निवार्य ।
रामं पुरस्कृत्य समित्रवर्गः
विवेश विष्णुर्विपिनान्तराणि ॥ १७ ॥

प्रेम्णेति ॥ विष्णुः प्रेम्णा स्नेहेन हेतुना परित्यक्तुं विरहयितुं अशक्नुवन्तं अपारयन्तं बद्धाञ्जलिं अञ्जलिं कुर्वन्तं बन्धुजनं गोष्ठवासिनं गोपगोपीजनं निवार्य निवर्त्य रामं पुरस्कृत्य अग्रतः कृत्वा मित्रवर्गैः सवयोभिः गोपकुमारैः सह वर्तत इति समित्रवर्गः सन् विपिनान्तराणि विपिनप्रदेशान् विवेश प्रविष्टवान् ॥ ॥१७॥

अरण्यभूमीरवगाहमानं
तमातपक्लान्तमवेक्षमाणः ।

पक्षातपत्रेण परिस्तृतेन
वियत्यसेविष्ट विहङ्गराजः ॥ १८ ॥

अरण्येति ॥ अरण्यभूमौ वनप्रदेशान् अवगाहमान प्रविशन्त तं विष्णु आतपेन सूर्यकिरणेन क्लान्त अवसन्न अवेक्षमाण पश्यन् विहङ्गराज गरुत्मान् वियति अम्बरे परिस्तृतेन विस्तारितेन पक्षेण गरुतैव आतपत्रेण छत्रेण असेविष्ट सेवितवान् ॥ ॥ १८ ॥

मा गच्छ गङ्गे यमुने क्व यासि
किं तत्र गोदावरि धावसीति ।
न्यषेधि तत्तद्व्यपदेशपूर्वं
मार्गच्युतं गोकुलमच्युतेन ॥ १९ ॥

मेति ॥ अच्युतेन कृष्णेन मार्गच्युत मार्गभ्रष्ट अपमार्गेण यातमित्यर्थ । गोकुल गोसमूह तत्तद्व्यपदेशपूर्वं तत्तन्नामपुरस्सर सङ्केतितेन नाम्ना शब्दापयित्वा तन्नाम्नैव हे गङ्गे ! मागच्छ गन्तु नार्हसि । यमुने ! क्व यासि कुत्र गच्छसि ? गोदावरि ! यत्र धावसि य देश उद्दिश्य पलायसे, तत्र किं प्रयोजन ? इति एवप्रकार न्यषेधि निवारितम् ॥ ॥ १९ ॥

प्ररूढसुस्निग्धतृणांकुरासु
छायाद्रुमश्यामळितान्तरासु ।
गवां कुलं तत्सुलभोदकासु
प्रचारयामास वनस्थलीषु ॥ २० ॥

प्ररूढेति ॥ स कृष्ण प्ररूढा प्रोद्भिन्ना सुस्निग्धा सुतरा स्निग्धा तृणाकुरा तृणप्ररोहा यासु । छायासहिता द्रुमा छायाद्रुमाः ते श्यामळित मेचकित अन्तर अवकाश यासाम् । सुलभ सुखप्राप्य उदक यासु

तादृशीषु वनस्थलीषु तत्तादृश गवां कुलं प्रचारयामास सञ्चारितवान् ॥

साटोपमान्दोळितलम्बसास्नाः
गावश्चरन्त्यो वलमानवालाः ।
त्रुट्यत्तृणस्तोमचटत्कृतिन्यः
चक्रुः प्रियं चेतसि चक्रपाणेः ॥ २१ ॥

साटोपमिति ॥ साटोपं साहङ्कारं आन्दोळिता चलिता लम्बा विलम्बिता सास्ना गळकम्बळानि यासाम् । 'सास्ना तु गळकम्बळ' इत्यमर । वलमानवाला तिर्यक्कम्पितलाङ्गूला त्रुट्यता चर्वणेषु छेदं गच्छता तृणस्तोमेन तृणसञ्चयेन हेतुना चटत्कृतिन्य चटदितिशब्दवत्य चरन्त्य तृणानि भक्षयन्त्य । 'चरगतिभक्षणयो'रिति धातु । गाव चक्रपाणे श्रीकृष्णस्य चेतसि मनसि प्रियं प्रीतिं चक्रु कृतवत्य ॥ ॥ २१ ॥

हरिन्मणिश्यामरुचीनि तत्र
स्वैरं चरन्तीषु तृणानि गोषु ।
शौरिस्स्वयं भुक्त इवाप तृप्तिं
तृप्यन्त्युदाराः परतर्पणेन ॥ २२ ॥

हरिदिति ॥ तत्र वने गोषु हरिन्मणय नीलरत्नानीव श्यामरुचीनि श्यामळवर्णानि तृणानि स्वैरं स्वच्छन्दं यथा तथा चरन्तीषु भक्षयन्तीषु सतीषु शौरि कृष्ण स्वयं भुक्त इव आत्मना भुक्तवानिव । भुक्तमस्यास्तीति अर्शआद्यच । तृप्तिं प्रीतिं आप प्राप्तवान् सुखिनोऽभूदित्यर्थ । तथाहि–उदारा महान्त परस्य तर्पणेन प्रीणनेन हेतुना तृप्यन्ति तृप्ता भवन्ति ॥

सर्वासु कण्डूयनलिप्सयोच्चैः
उन्नम्य कण्ठं दधतीषु गोषु ।

बालो हरिर्बाहुसहस्रशून्यं
जन्मात्मनो निष्फलमेव मेने ॥ २३ ॥

सर्वास्विति ॥ सर्वासु गोपु कण्डूयन गात्रनिकर्षण लब्धुमिच्छया कण्ठ उच्चं उन्नम्य अतिनग उद्गमय्य दधतीपु धारयन्तीपु सतीपु बाल हरि आत्मन स्वस्य जन्म जनन बाहुसहस्रेण शून्य रहित निष्फलमेव निष्प्रयोजनमेवेति मेने कल्पितवान् । बहूना गवा कण्डूयन बाहुद्वयेन कथ करोमीति चिन्तयेति भाव ॥ ॥ २३ ॥

परिभ्रमद्गोकुलमुग्रकोपं
समुच्चलद्धूलि रटद्विषाणम् ।
स युद्धमुक्ष्णां मदनिर्भराणां
प्रविश्य मध्यं शमयाञ्चकार ॥ २४ ॥

परीति ॥ स हरि मदनिर्भराणा अतिमात्रमत्ताना उक्ष्णा वृषभाणा परिभ्रमन्ति परित निवश सञ्चरन्ति गोकुलानि यत्र । तथा उग्र कोप अतिप्रवृद्धकोप समुच्चलद्धूलि समुद्धूतभूमिरजस्क रटद्विषाण चटदिति शब्दायमानशृङ्ग युद्ध द्वंद्वयुद्ध मध्य प्रविश्य शमयाञ्चकार प्रशम नीतवान् ॥ ॥ २४ ॥

शाखाकराग्रैरवलंब्य पृथ्वीं
निषेदुषः पुष्पफलावनम्रान् ।
तत्र द्रुमान् सादरमीक्षमाणः
जगाम तृप्तिं न कदाऽपि शौरिः ॥ २५ ॥

शाखेति ॥ शौरि कृष्ण तत्र वने शाखाभि विटपै रेव कराग्रै पृथ्वीमवलम्ब्य आश्रित्य निषेदुष निषण्णान् पुष्पै फलैश्च अवनम्रान् नमन

शीलान् द्रुमान् वृक्षान् सादर साभिप्राय ईक्षमाण पश्यन् कदाऽपि कदा-
चिदपि तृप्तिं अलभात्र नजगाम नप्राप्तवान् । अत्र समृद्धाना दानशीलत्वात्
परोपकारिणा महता समाधिस्साभिप्रायदर्शने हेतुः ॥ ॥२५॥

अलक्ष्यमूलान्यतिविप्रकर्षात
घोषानुमेयस्खलितोदकानि ।
उत्तुङ्गरोधस्तरुमण्डलानि
निम्नानि दृष्ट्वा नितरां स रेमे ॥ २६ ॥

अलक्ष्येति ॥ सशौरिः अतिविप्रकर्षात् अत्यन्तदूरस्थत्वात् अलक्ष्य-
मूलानि द्रष्टुमशक्यमूलतलानि घोषेण वीचिवेगेन अनुमेयस्खलितानि अनु-
मातु शक्यसङ्घट्टनानि उदकानि येषु उत्तुङ्गानि उन्नतानि रोधस्तरूणा ती-
रवृक्षाणा मण्डलानि समूहः येषा तादृशानि निम्नानि अगाधान् जलाश-
यान् दृष्ट्वा नितरा अतिशयेन रेमे प्रीतवान् । अत्रापि पूर्ववत् सभूतगनस्य
समाधि प्रीतिहेतुः ॥ ॥२६॥

अतुच्छगुच्छस्तनभारनम्राः
लताः प्रवाळाधरलोभनीयाः ।
स तत्र वीक्ष्य भ्रमराळकाढ्याः
तामस्मरत्तामरसाधिवासाम् ॥ २७ ॥

अतुच्छेति ॥ सः शौरिः तत्र वने अतुच्छाना पृथूना गुच्छाना स्त-
बकानामेव स्तनाना भारेण नम्राः नमनशीलाः प्रवालैरेवाधरैरधरोष्ठैः लोभ-
नीयाः रम्याः भ्रमरैर्मधुकरैरेवालकैः चूर्णकुन्तलैः आढ्याः श्रेष्ठाः लताः वा-
लवल्लरीः वीक्ष्य दृष्ट्वा ता तथाभूता तामरसाधिवासा पद्मालया अस्मरत्
स्मृतवान् । स्मरणालङ्कारः । सदृशवस्त्वन्तरानुभवे सभूतत्वात् ॥ २७ ॥

समुत्सुकं सागरकन्यकायां
आक्रष्टुमन्तःकरणं मुरारेः ।
सर्वस्य वेत्ता सरसां स वाचं
सङ्कर्षणस्सादरमित्युवाच ॥ २८ ॥

समुत्सुकमिति ॥ सर्वस्य वस्तुनः वेत्ता ज्ञाता सङ्कर्षणः बलदेवः मुरारेः कृष्णस्य सागरकन्यकायां लक्ष्म्या समुत्सुकं सदृगवस्तुदर्शनात् साभिलाषं अन्तःकरणं मनः आक्रष्टुं आक्षेप्तुं सरसां रसवतीं वाचं सादरं इति वक्ष्यमाणप्रकारेण उवाच उक्तवान् ॥ ॥ २८ ॥

अन्तस्समीरभ्रमणप्रसङ्गात्
उदीर्णनादेन गुहामुखेन ।
भूयः प्रयुङ्क्ते पृथिवीधरस्ते
गोवर्धनस्स्वागतमेव शौरे ॥ २९ ॥

अन्तरिति ॥ हे शौरे ? एषः परिदृश्यमानः गोवर्द्धनो नाम पृथिवीधरः पर्वतः अन्तः अन्तर्भागे समीरभ्रमणस्य वायुसञ्चारस्य प्रसङ्गात् प्रवृत्तेर्हेतोः उदीर्णनादेन उद्गतशब्देन गुहायाः रन्ध्रेणैव मुखविवरेण भूयः भूयशः ते स्वागतं सुखागमनप्रश्नं प्रयुङ्क्ते करोति ॥ ॥२९॥

निशम्य गोवर्धननिर्झराणां
धीरध्वनिं कृष्ण शिखण्डिनोऽमी ।
मुदा त्वदालोकनजातयेव
नृत्यन्ति चक्रीकृतबर्हभाराः ॥ ३० ॥

निशम्येति ॥ हे कृष्ण ? अमी शिखण्डिनः मयूराः गोवर्द्धनस्य नि-

झराणा वारिप्रवाहाणाम् । 'वारिप्रवाहोनिर्झरोझर' इत्यमर । धीरध्वानं गम्भीररव निशम्य चक्रीकृतबर्हभारा वलयितपिच्छजालास्सन्त नृत्यन्ति नृत्य कुर्वन्ति । त्वदालोकनात् तव दर्शनात् सकाशात् जातया उद्गतया मुदा सन्तोषेणेवेत्युत्प्रेक्षा ॥ ॥ ३० ॥

पादाविमौ सञ्चरणाय नालं
अत्रेति मत्वा मृगयूथमेतत् ।
स्वलोचनांशुस्तवकापदेशात्
नीलोत्पलैर्भूमिमिवास्तृणाति ॥ ३१ ॥

पादाविति ॥ एतत् मृगयूथ मृगगण इमौ पादौ । तवेत्यर्थ । अत्र वने सञ्चरणाय सचार कर्तुं नाल न शक्ताविति मत्वा अवबुध्य स्वेषा आत्मीयाना लोचनाना अशुस्तबकस्य स्तबकाकारस्य अशो अपदेशात् व्याजात् नीलोत्पलै कुवलयै भूमिं आस्तृणाति आच्छादयतीव । मृदुत्वसिद्धये पुष्पास्तरण करोतीवेत्युत्प्रेक्षा ॥ ॥ ३१ ॥

विकीर्य विष्वग्विपिनद्रुमाणां
मधूनि पुष्पस्तवकच्युतानि ।
अर्कांशुतप्तामनिलो धरित्रीं
सञ्चारयोग्यां भवतो विधत्ते ॥ ३२ ॥

विकीर्येति ॥ अनिल वायु अर्कांशुभि सूर्यरश्मिभि तप्ता ऊष्माण गमिता धरित्रीं भूमिं विपिनद्रुमाणा वनवृक्षाणा पुष्पस्तबकेभ्य च्युतानि निपतितानि मधूनि विष्वक् परित विक्षिप्य प्रोक्षण कृत्वेत्यर्थ । भवत तव सचारयोग्या गमनक्षमा विधत्ते करोति । इत्यादरभावात् इय च गम्योत्प्रेक्षा ॥ ॥ ३२ ॥

न भीतिरन्त र्न दृशोश्चलत्वं
नास्था तृणे नोत्सुकताऽपि शावे ।
रूपेण दामोदर मोहितास्ते
तिष्ठन्त्यमी काष्ठकृता इवैणाः ॥ ३३ ॥

नेति ॥ हे दामोदर ! ते तव रूपेण सौन्दर्येण मोहिता विवशीकृता अमी एणा हरिणा काष्ठै दारुभि कृता निर्मिता इव तिष्ठन्ति । तत्र हेतुमाह चतुर्भि वाक्ये । अन्त मनसि भीति भय न दृश्यते । दृशो चक्षुषो चलत्व चलमान नास्ति। तृणे यवसभक्षणे आस्था आदर नास्ति। शावे शिशौ च उत्सुकता सश्रद्धत्वमपि नास्ति। अतो हि कृत्रिमसादृश्यम्॥

तेनेति सन्दर्शितमग्रजेन
मनोहरं तत्तदवेक्षमाणः ।
गाश्चारयन् शाड्वलिनीषु भूषु
रेमे रमाया रमणः प्रकामम् ॥ ३४ ॥

तेनेति ॥ इति एवप्रकार तेन अग्रजेन रामेण सन्दर्शित सम्यक दर्शित मनोहर तत्तत् तादृश वस्तु अवेक्षमाण पश्यन् रमाया रमण कृष्ण शाड्वलिनीषु हरिततृणयुक्तासु भूषु गा चारयन् प्रकाम अत्यर्थ रेमे क्रीडितवान् ॥ ॥ ३४ ॥

तं तत्र दृष्ट्वा महनीयरूपं
शौरिं शबर्यश्चरितार्थनेत्राः ।
फलोपहारैरुपसृत्य वन्यैः
अवादिषुः प्रश्रयशोभि वाक्यम् ॥ ३५ ॥

तमिति ॥ तत्र वने शबर्यः व्याधस्त्रियः महनीयस्य पूजनीयसौन्दर्ययुक्तं शौरिं दृष्ट्वा चरितार्थनेत्राः कृतार्थलोचनाः नेत्रफलं प्राप्ता इत्यर्थः। वन्यैः वनजातैः फलैरेव उपहारैः उपपदार्थैस्सह उपसृत्य समीपं प्राप्य प्रश्रयेण विनयेन शोभितु शीलमस्येति तादृशं वाक्यं अवादिषुः उक्तवत्यः ॥

इतः पदं नश्शरपातमात्रं
यायास्सहानेन सुहृद्गणेन।
अत्रागमिष्यन्ति किरातपुत्राः
गवाममूषां परिपालनाय ॥ ३६ ॥

इत इति ॥ इतः अस्मात् प्रदेशात् शरपातमात्रं शरपतनमात्रान्तरं नः अस्माकं पदं स्थानं त्वं अनेन सुहृद्गणेन मित्रवृन्देन सह यायाः प्राप्नुहि। आमन्त्रणे लोट्। किं कारणमिति चेत् उच्यते— अमूषां गवां परिपालनाय त्राणार्थं अत्र किरातपुत्राः वनेचरकुमाराः आगमिष्यन्ति ॥

व्याधाहृतैर्वारणकुम्भगर्भात्
मुक्ताफलैरामलकाभिरामैः।
प्रसाधनं त्वां भुवनत्रयस्य
प्रसाधयिष्यन्ति किरातकन्याः ॥ ३७ ॥

व्याधेति ॥ केवलं इदमेव वन्यं अन्यच्च प्रयोजनं भविष्यतीत्याहुः। किरातकन्याः शबरकन्याः वारणस्य गजस्य कुम्भस्य मस्तकस्य गर्भात् अन्तर्भागात् सकाशात् व्याधैः शबरैरेव आहृतैः आनीतैः आमलकानि धात्रीफलानि तैरिव अभिरामैः सुन्दरैः तत्प्रमाणैरिति यावत्। मुक्ताफलैः मौक्तिकैः भुवनत्रयस्य त्रैलोक्यस्य प्रसाधनं अलङ्कारभूतमपि त्वां प्रसाधयिष्यन्ति अलङ्करिष्यन्ति ॥ ॥ ३७ ॥

कन्याऽस्ति काचिच्छबरेश्वरस्य
या नः कुलानामधिदेवतेव।
तां सर्वथा दास्यति ते स राजा
महान्त्यनर्घाणि च यौतकानि ॥ ३८॥

अपिचान्यदप्यस्तीत्याहु — कन्येति ॥ शबरेश्वरस्य किरातराजस्य कन्या काचिदस्ति । सा कीदृशीति चेदुच्यते— या कन्या नः अस्माकं शबराणां कुलानां अधिदेवतेव मूर्तिमतीव भवति । तादृशं अस्याः सौन्दर्यमिति भावः । स राजा किरताधिपतिः सर्वथा सर्वप्रकारेणापि ते तुभ्यं तां कन्यां दास्यति । महान्ति प्रभूतानि अनर्घाणि मूल्यातिरिक्तानि यौतकानि स्त्रीधनानि च दास्यति तदेना परिगृहाणेत्यभिप्रायः ॥ ॥ ३८ ॥

इत्यूचिषीणां शबराङ्गनानां
अत्यादरं चेतसि वीक्षमाणः ।
कृष्णः कृपानिघ्नमनास्स वाचं
इत्याह लज्जामृदुना स्वनेन ॥३९॥

इतीति ॥ इति एवं ऊचिषीणां उक्तवतीनां शबराङ्गनानां अत्यादरं चेतसि वीक्षमाणः मनसि पश्यन् अवधारयन्नित्यर्थः । कृपाया दयाया निघ्नं आयत्तं मनः यस्य स तथोक्तः सः कृष्णः लज्जया मृदुना स्वनेन इति वक्ष्यमाणप्रकारेण वाचं आह उक्तवान् ॥ ॥ ३९ ॥

पित्रोरनुज्ञामधिगम्य भद्राः
समीहितं वस्सकलं विधास्ये ।
मयि स्थिते तिष्ठति गोकुलं तत्
गच्छामि माभूत विषादवत्यः ॥४०॥

पित्रोरिति ॥ हे भद्राः शोभनाः? पित्रोः मातुः पितुश्च अनुज्ञा अधिगम्य लब्ध्वा वः युष्माकं समीहितं अभिप्रायं सकलं सर्वमपि विधास्ये करिष्यामि । किंच अन्यदप्यस्ति । मयि स्थिते सति गोकुलं गोसमूहोऽपि तिष्ठति न गच्छति । तत् तस्माद्धेतोः अहं गच्छामि । यूयं विषादवत्यः विषण्णाः माभूत । विषादः न कर्तव्य इत्यर्थः ॥ ॥ ४० ॥

गते पुलिन्दीरिति सान्त्वयित्वा
तदिष्टभङ्गव्यथिते मुकुन्दे ।
फलापचायादिषु निस्पृहास्ताः
शनैर्ययुः पक्कणमेव खिन्नाः ॥ ४१ ॥

गत इति । इति एवंप्रकारं पुलिन्दीः शबरीः सान्त्वयित्वा अनुसरणवाचा अनुज्ञाप्य तदिष्टभङ्गेन तासां पुलिन्दिनीनामभिप्रायनिराकरणेन व्यथिते किंचित् दुःखिते मुकुन्दे गते सति ताः पुलिन्द्यः खिन्नाः खेदयुक्ताः फलानामपचायादिषु आदिशब्देन कन्दखननादापि गृह्यते । निस्पृहाः निराकाङ्क्षास्सत्यः शनैः मन्दमन्दं पक्कणमेव स्वालयमेव ययुः गताः ॥ 'पक्कणश्शबरालयः' इत्यमरः ॥ ॥४१॥

विहृत्य गर्भेषु लतागृहाणां
निपीय वारीणि च पल्वलानाम् ।
फलानि चास्वाद्य महीरुहाणां
वनानि धन्यानि चकार शौरिः ॥ ४२ ॥

विहृत्येति ॥ शौरिः लतागृहाणां वल्लीकुञ्जानां गर्भेषु अन्तर्भागेषु विहृत्य क्रीडित्वा पल्वलानां अल्पसरसां 'पल्वलस्त्वाल्पसरः' इत्यमरः । वारीणि जलानि निपीय च पीत्वा च महीरुहाणां चूतादिवृक्षाणां फलानि चास्वाद्य भुक्त्वा वनानि धन्यानि भाग्यवन्ति चकार कृतवान् । स्वमपदो भगवदनु-

भुक्तत्वात् सप्रयोजना इति भावः ॥ ॥४२॥

अथाधिरूढे गगनस्य मध्यं
दिवाकरे दुस्सहभानुजाले।
घर्माकुलं गोकुलमीक्षमाणः
हलायुधः प्राह रथाङ्गपाणिम् ॥ ४३ ॥

अथेति ॥ अथ अनन्तर दुस्सहं सोढुमशक्य भानुजाल रश्मिसमूहो यस्य तादृशे दिवाकरे गगनस्य अबरस्य मध्य अधिरूढे अधिगते सति गोकुलं गोगण घर्मेण ग्रीष्मकालेन हेतुना आकुलं विवश ईक्षमाणः पश्यन् हलायुधः रामः रथाङ्गपाणिं कृष्ण प्राह उक्तवान् । आहेति तिङन्तप्रतिरूपमव्ययम् । अतः कालत्रयेऽपि प्रयोज्यम् ॥ ॥४३॥

किञ्चित्परिम्लानलताप्रवाळः
तृणाङ्कुरभ्रान्तकुरङ्गयूथः।
अह्नः परित्यक्तजनप्रचारः
प्रवर्तते मध्यम एष भागः ॥ ४४ ॥

किंचिदिति ॥ किंचित् अल्पं परिम्लानाः शोषिताः लताना प्रवाळाः किसलयाः यस्मिन् । तृणानामङ्कुरेषु भ्रान्तानि दुर्लभत्वादन्विष्य सन्तरन्तीत्यर्थः । कुरङ्गयूथानि मृगकुलानि यस्मिन् 'तृष्णाकुलभ्रान्तकुरङ्गयूथ' इति वा पाठः।तत्र तृष्णया आकुलं भ्रान्तं चेति विग्रहः। परित्यक्तः जनाना प्रचारः सचारः यस्मिन् । तादृशः दिवसस्य मध्यमः भागः अशः एषः प्रवर्तते । मध्याह्नसम्पृक्त इत्यर्थः ॥ ॥४४॥

कुलानि वीक्षस्व विहङ्गमानां
पक्षान्तरस्थापितशावकानि ।

कठोरमेनं गमयन्ति कालं
नीडेषु निद्रालसलोचनानि ॥४५॥

कुलानीति ॥ पक्षयोरन्तरे अन्तर्भागे स्थापिताः शावकाः शिशवो यैः निद्रया अलसानि जडीभूतानि लोचनानि येषां तानि । कठोरं क्रूरं एनं कालं मध्याह्नकालं नीडेषु कुलायेषु गमयन्ति यापयन्ति विहङ्गमानां पक्षिणां कुलानि त्वं वीक्षस्व पश्य ॥ ॥४५॥

प्रायः कठोरातपपीडयेव
छायाः परित्यक्तबहिर्विहाराः ।
आलोकयाध्वन्यजनेन सार्धं
अध्यासते मूलमनोकहानाम् ॥ ४६ ॥

प्राय इति ॥ अनोकहानां वृक्षाणां छायाः अनातपाः प्रायः बाहुल्येन कठोरातपपीडया क्रूरतरातपकृतया व्यथयेव परित्यक्तः उपेक्षितः बहिर्विहारः बहिर्मार्गेषु क्रीडा यैः अध्वन्यजनेन पान्थलोकेन सार्धं मूलं अनोकहानां अधोभागमेव केवलं अध्यासते अधिवसन्ति । आलोकय पश्य ॥४६॥

करैरसह्यैरयमंशुमाली
तपन्महीमुग्र इव क्षितीशः ।
आशंसितापत्रसरः प्रजाभिः
धत्ते दशामद्य विगर्हणीयाम् ॥ ४७ ॥

करैरिति ॥ उग्रः तीक्ष्णः क्षितीशः राजेव असह्यैः सोढुमशक्यैः करैः रश्मिभिः बलिभिश्च महीं भूमिं भूवासिजनं च तपन् दहन् दण्डयंश्च अंशुमाली सूर्यः अद्य अत्र प्रजाभिः जनैः आशंसितापत्रप्रसरः प्रार्थितनाशः नाप्राप्तिः प्रार्थितविनाशप्रवृत्तिश्च विगर्हणीयां निन्द्यां दशां अवस्थां धत्ते धार-

यति । 'तीक्ष्णदण्डान्महीभर्तुरुद्विजन्ते शरीरिण' इति वचनानुसारेणोपमानस्वीकारः ॥ ॥४७॥

विहृत्य कान्तारमहीषु वेगात्
व्रजन्नपः पुष्करिणीषु पातुम् ।
मार्गे करीन्द्रः करशीकरेण
प्रियामसावुक्षति तापखिन्नाम् ॥ ४८ ॥

विहृत्येति ॥ असौ करीन्द्रो गजश्रेष्ठः कान्तारमहीषु वनभूमिषु विहृत्य क्रीडित्वा पुष्करिणीषु कमलसरस्सु अपः जलं पातुं वेगात् व्रजन् गच्छन् मार्गे तापखिन्नां आतपक्लान्तां प्रियां करिणीं करशीकरेण पुष्कराग्रजलेन उक्षति सिंचति ॥ ॥४८॥

तप्तानि भासा तपनस्य हंसाः
विहाय वारीणि नखंपचानि ।
पत्रेषु विन्यस्य पदानि मन्दं
पद्माकरे संप्रति पर्यटन्ति ॥ ४९ ॥

तप्तानीति ॥ संप्रति इदानीं हंसाः तपनस्य भासा सूर्यस्य तेजसा तप्तानि उष्णीकृतानि नखंपचानि नखमूलावधिदाहदानि वारीणि जलानि विहाय त्यक्त्वा पद्माकरे पद्मतटाके । 'पद्माकरस्तटाकोऽस्त्री' इत्यमरः । पत्रेषु पद्मदळेषु पदानि विन्यस्य मन्दं शनैः पर्यटन्ति परितस्संचरन्ति ॥ ४९ ॥

निगूढमीनग्रहणाभिसन्धिं
कृच्छ्रेण मुक्त्वा कपटासिकां स्वाम् ।
अमी बकोटास्तपनांशुतापात्
तटीनिकुञ्जं तरसा विशन्ति ॥ ५० ॥

निगूढेति ॥ अमी बकोटा बकपक्षिण स्वा आत्मीया स्वजातिसमवेता निगूढ नितरा गोपित मीनाना मत्स्याना ग्रहणे स्वीकारे अभिसान्धि तात्पर्य यस्या तादृशीं कपटासिका व्याजेन स्थितिं कृच्छ्रेण यत्नेन मुक्त्वा त्यक्त्वा तपनाशुतापात् सूर्याशुसन्तापाद्धेतो तटीनिकुञ्ज तीरलतागृह तरसा क्षिप्र प्रविशन्ति अन्तर्गच्छन्ति ॥ ॥५०॥

तदेहि यामस्तरुषण्डमेतत्
घर्माकुलं गोकुलमानयामः ।
अत्रैव विश्रम्य मुहूर्तमात्रं
भूयोऽपि गावः प्रचरन्त्वरण्ये ॥ ५१ ॥

तदिति ॥ तत् तस्माद्धेतो त्वमेह्यागच्छ । वय याम गच्छाम । किमर्थमिति चेदत्राह–घर्माकुल ग्रीष्मेणाकुल सन्तप्त गोकुल गोसमूह एतत् दृश्यमान तरुषण्ड वृक्षकदम्बकमानयाम । गाव अत्रैव अस्मिंस्तरुषण्डमूले मुहूर्तमात्र द्विघटिकमात्र विश्रम्य श्रममपनीय भूयोऽपि पुनरपि अरण्ये प्रचरन्तु सञ्चरन्तु ॥ ॥ ५१ ॥

इतीरितं तत्समयानुरूपं
वाक्यं समाकर्ण्य हलायुधस्य ।
आर्यो यदाज्ञापयतीति कृष्णः
तं राममुक्त्वा तरुषण्डमाप ॥५२॥

इतीति ॥ समयानुरूप्य कालोचित इति एवप्रकार हलायुधस्य ईरित कथित वाक्य समाकर्ण्य कृष्ण यदाज्ञापयत्यार्य तथाऽस्त्विति शेष । इति त राममुक्त्वा तरुणा षण्ड कदम्बक आप प्राप्तवान् ॥ ॥५२॥

अलब्धमार्ताण्डकरप्रवेशं
आरामकल्पं तरुषण्डमेत्य ।
आनेतुकामस्स गवां कुलं तत्
आसञ्जयामास मुखेन वेणुम् ॥५३॥

अलब्धेति ॥ सः कृष्णः अलब्धः अप्राप्तः मार्तण्डकराणां सूर्यरश्मीनां प्रवेशो येन तादृशं आरामकल्पं उद्यानतुल्यं तरुषण्डं एत्य प्राप्य तत् गवां कुलं आनेतुकामः आगमयितुमिच्छन् वेणुं मुरलीं मुखेन आसञ्जयामास योजयाञ्चकार ॥ ॥५३॥

सलीलमीषत्परिपृक्तपादं
सविभ्रमोदञ्चितसव्यनेत्रम् ।
कृष्णस्य वंशार्पितपाटलोष्ठं
वीक्ष्य स्थितिं विस्मयमाप लोकः ॥५४॥

सलीलमिति ॥ लोकः द्रष्टृजनः कृष्णस्य सलीलं लीलया सह किञ्चित्परिपृक्तपादं व्यत्यस्ताङ्घ्रि सविभ्रमं सविन्यासं यथातथा उदञ्चितमुन्नमितं सव्यनेत्रं वामनयनं यत्र । सव्यशब्दो वामपर्यायः । तथाच श्रीरामायणे 'दक्षिणो दक्षिणं बाहुं रामस्स्तु पराक्रमः । चिच्छेदश्च कबन्धस्य सव्यं वीरस्तु लक्ष्मणः' इति । वंशे वेणौ अर्पितः न्यस्तः पाटलः अरुणः ओष्ठो यत्र । तादृशीं स्थितिमवस्थानं वीक्ष्य दृष्ट्वा विस्मयमाश्चर्यमाप प्राप्तवान् ॥

तत्र स्थितं तामरसायताक्षं
तापिञ्छवर्णं शिखिपिञ्छचूडम् ।

तमेव पश्यन्ननिमेषतायाः
फलं प्रपेदे सुरसिद्धसङ्घः ॥ ५५ ॥

तत्रेति ॥ तत्र तरुषण्डे स्थित तामरसायताक्षं पद्मदीर्घनेत्रं तापिञ्छस्य तमालद्रुमस्येव वर्णो यस्य तादृश शिखिपिञ्छचूड मयूरबर्हयुक्ता चूडा शिखा यस्य तादृश च त कृष्णमेव पश्यन् सुरसिद्धानां सङ्घः समूहः अनिमेषतायाः दृशोः निमेषाभावस्य फल प्रयोजनं प्रपेदे लेभे ॥ ॥५५॥

ततस्त्रिभङ्ग्या विवरेषु वेणोः
व्यापारयन्नङ्गुलिपल्लवानि ।
जगत्त्रयीमोहविधानदक्षं
उत्थापयामास स नादमुच्चैः ॥ ५६ ॥

ततइति ॥ त्रयाणा भङ्गाना समाहारः त्रिभङ्गी । तयोपलक्षितः । तदुक्तम्— 'जानुश्रोण्योर्गळे चापि यत्र स्याद्नुवक्रता । सा त्रिभङ्गीति विज्ञेया स्थिति'रिति ॥ तथा स्थितः सः कृष्णः वेणोः वंशस्य विवरेषु रन्ध्रेषु अंगुलिपल्लवानि पल्लवतुल्या अगुलीः व्यापारयन् प्रवर्तयन् जगता त्रय्याः त्रैलोक्यस्य मोहविधाने आनन्दमूर्च्छोत्पादने दक्ष निपुण उच्चैर्नाद उच्चस्वरं उत्थापयामास उद्गमयाञ्चकार ॥ ॥ ५६ ॥

अथोत्थितानन्दनिमीलिताक्ष्यः
विस्रन्दूर्वाङ्कुरलाञ्छितास्याः ।
गावस्तदभ्याशमुपेत्य तस्थुः
निस्पन्ददेहा निभृतैश्श्रवोभिः ॥ ५७ ॥

अथेति ॥ अथ वेणुनादश्रवणानन्तरं गावः टलिनेन उद्भूतेन आनन्देन हेतुना निमीलिताक्ष्यः मुकुलितनेत्राः विलूनैः छिन्नैः दूर्वाङ्कुरैः लाञ्छितास्याः सचिह्नमुख्यः तस्य कृष्णस्य अभ्याशं समीपं उपेत्य प्राप्य निष्पन्ददेहाः निश्चलशरीराः निभृतैः स्थिरैः श्रवोभिः कर्णैः उपलक्षिताः तस्थुः स्थिताः ॥

नैसर्गिकं वैरमपत्यसङ्गः
तृष्णा बुभुक्षा कुसुमायुधश्च ।
तद्वेणुनादश्रुतितत्पराणां
नालं विधातुं विकृतिं तिरश्चाम् ॥ ५८ ॥

नैसर्गिकमिति ॥ नैसर्गिकं स्वभावतः जातं वैरं परस्परद्वेषः अपत्यैः पुत्रैः सङ्गः स्नेहबन्धः तृष्णा पिपासा बुभुक्षा क्षुत् कुसुमायुधः कामश्च एते भावाः तस्य कृष्णस्य वेणुनादस्य श्रुतौ श्रवणे तत्पराणां सश्रद्धानां तिरश्चां पशुपक्षिमृगादीनां विकृतिं चित्तविकारं विधातुं उत्पादयितुं नालं न पर्याप्ता बभूवुः ॥　　　　॥ ९८ ॥

तस्मिन् मनोहारिणि चक्रपाणेः
वनान्तरे मूर्छति वंशनादे ।
विधीयमानं परिहृत्य कर्म
सर्वेऽपि सत्वा लिखिता इवासन् ॥ ५९ ॥

तस्मिन्निति ॥ चक्रपाणेः कृष्णस्य तस्मिन् तादृशे मनोहारिणि मनो हर्तुं शीलवति वंशनादे वेणुस्वने वनान्तरे वनप्रदेशे मूर्छति वर्द्धमाने सति सर्वे सत्वाः वनजन्तवोऽपि विधीयमानं क्रियमाणं कर्म चेष्टितं परिहृत्य विहाय लिखिताः चित्रार्पिता इव आसन् बभूवुः ॥　　　　॥ ९९ ॥

प्रवृत्तमात्रौ वनपद्मिनीषु
दातुं गृहीतुं च मृणाळभङ्गम्।
चक्राह्वयस्तद् गृहमेधिनी च
प्रसार्य चंचू परमासिपाताम् ॥ ६० ॥

तद्व्यापारमेव प्रपञ्चयति— प्रवृत्तेति ॥ वनपद्मिनीषु कान्तारसरसीषु चक्राह्वयः चक्रवाकः तस्य गृहमेधिनी भार्या च मृणाळभङ्गं बिसच्छेदं दातुं प्रियायै समर्पयितुं गृहीतुं प्रियायाः आदातुं च प्रवृत्तमात्रौ केवलं आरब्धावेव चंचू त्रोटियुग्म प्रसार्य विवृतं कृत्वा परं केवलं आसिषातां आसीनौ ॥ ॥ ६० ॥

उपाविशन्नुज्झितचापलानि
स्वजानुविन्यस्तकराननानि ।
निष्पन्ददृष्टीनि वनद्रुमाणां
शाखासु शाखामृगमण्डलानि ॥ ६१ ॥

उपाविशन्निति ॥ शाखामृगमण्डलानि वानरकुलानि वनद्रुमाणां वनवृक्षाणां शाखासु विटपेषु उज्झितं त्यक्तं चापलं अनङ्गः प्लवनादिश्चापल्यं यैः स्वजानुनोः आत्मजानुयुग्मस्य उपरि विन्यस्तो निहितो करो तदुपरि आननञ्च यैः निष्पन्दा निश्चला दृष्टयः येषां तथा सन्ति उपाविशन् उपविशन्तिस्म ॥ ॥ ६१ ॥

पद्भ्यामवष्टभ्य महीमुभाभ्यां
सद्यस्समुत्तंभितपूर्वकायः ।

सिंहः करीन्द्राक्रमणे प्रवृत्तः
तस्थौ तथा कृत्रिमसिंहकल्पः ॥६२॥

पद्भ्यामिति ॥ उभाभ्यां पद्भ्यां पदाभ्यां महीं अवष्टभ्य अवलम्ब्य सद्य तत्क्षणमेव समुत्तभितपूर्वकाय सम्यक् उन्नमितोत्तमाङ्गस्सन् करीन्द्राक्रमणे गजेन्द्रस्य हनने प्रवृत्त उद्युक्त सिंह तथा तदवस्थ एव कृत्रिमसिंहकल्प दार्वादिविरचितसिंहसदृश तस्थौ स्थित । भगवद्वंशनादश्रवणाहृतचित्तत्वात् अस्य शरीरे निर्विकारत्वमिति द्रष्टव्यम् ॥ ॥६२॥

सिद्धाः कळत्राणि लतागृहेषु
समुद्यताः पाययितुं मधूनि ।
करद्वयोदञ्चितरत्नपात्राः
निषेदुरालेख्यमिव प्रपन्नाः ॥६३॥

सिद्धा इति ॥ लतागृहेषु वर्तमाना सिद्धा कळत्राणि भार्या मधूनि पाययितु समुद्यता उद्युक्ता करद्वये उदञ्चित उद्धृत रत्नपात्र मणिचषक ये तादृशा एव निषेदु स्थिता आलेख्य चित्र प्रपन्ना इव चित्रलिखिता इवेत्यर्थ ॥ ॥६३॥

तद्वंशनाळाच्च्युतमच्युतस्य
गेयामृतं साधु निपेव्य वृक्षाः ।
चिरं जराजर्झरितत्वचोऽपि
बाला इवासन्नवपल्लवाढ्याः ॥६४॥

तदिति ॥ वृक्षा चिर दीर्घकाल जरया वार्धक्येन जर्झरितत्वच जीर्णचर्माणोऽपि अच्युतस्य वंशनाळात् वेणुविवरात् च्युत गळित तत् गेय गानमेव अमृत साधु सम्यक् निपेव्य आस्वाद्य श्रोत्रेन्द्रियेणैव अनुभु-

येत्यर्थ । नवे नूतने पल्लवे किसलये आढ्या पुष्टा बाला इव आसन् अभूवन् ॥ ॥ ६४ ॥

नादेन वेणोर्विवशीकृतानां
विद्याधराणां गलिताः करेभ्यः ।
गतिर्भवास्माकमपीति नूनं
वीणा निपेतुर्मधुविद्विषोऽग्रे ॥६५॥

नादेनेति ॥ वेणो नादेन विवशीकृताना निधुरीकृताना विद्याधराणा करेभ्य स्वकरात् गलिता पतिता वीणा मधुविद्विष कृष्णस्य अग्रे पुरोभागे निपेतु पतिता । त्व अस्माकमपि गति शरण भवेति मत्वा नून निश्चय इति उत्प्रेक्षा ॥ ॥ ६५ ॥

स्ववेणुनादेन सजीवलोकं
इत्थं परानन्दमयं विधाय ।
प्रभुर्व्यरंसीदमराश्च सर्वे
सुप्तोत्थितानां स्थितिमन्वभूवन् ॥ ६६ ॥

स्वेति ॥ स प्रभु श्रीकृष्ण इत्थ एव प्रकार स्वस्य वेणो नादेन जीवलोक प्राणिसमूह परानन्दमय अत्यन्तानन्दमय विधाय कृत्वा व्यरंसीत् वेणुनादात् विरतोऽभूत् । सर्वे अमरा देवाश्च सुप्तोत्थिताना स्थिति अवस्था अन्वभूवन् अनुभूतवन्त ॥ ॥ ६६ ॥

प्रत्यागते चेतसि ते विदित्वा
प्रभ्रश्य हस्तात्पतिता विपञ्चीः ।

पुनर्न चक्रुः प्रतिपन्नलज्जाः
विद्याधरास्तद्ग्रहणाभिलापम् ॥६७॥

प्रत्यागत इति ॥ ते विद्याधराः चेतसि प्रत्यागते वैवश्यापगमे यथा स्थानस्थिते सति हस्तात् प्रभ्रश्य भ्रंश प्राप्य पतिताः विपञ्चीः वीणाः । 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः । विदित्वा ज्ञात्वा प्रतिपन्नलज्जाः प्राप्तव्रीळास्सन्तः पुनः तस्याः विपञ्च्याः ग्रहणे स्वीकारे अभिलाप वाञ्छा न चक्रु न कृतवन्त ॥ ॥ ६७ ॥

मधुव्रतानां ध्वनिभिर्मनोज्ञैः
वाचालयन्ती वलयं दिशानाम् ।
प्रसूनवृष्टिस्सुरसिद्धमुक्ता
पपात मौळौ परमस्य पुंसः ॥६८॥

मध्विति ॥ मधुव्रतानां भ्रमराणां मनोज्ञैः ध्वनिभिः झङ्कारैः दिशानां आशानाम् । दिशेत्याबन्तः । 'आपंचैव हलन्तानां यथा वाचा दिशा निशा' इति वचनात् । वलयं मण्डलं वाचालयन्ती मुखरयन्ती सुरैः सिद्धैश्च मुक्ता विसृष्टा प्रसूनवृष्टिः पुष्पवर्षं परमस्य पुंसः कृष्णस्य मौळौ मूर्ध्नि पपात पतिता ॥ ॥ ६८ ॥

अवर्षि केनायमदृष्टपूर्वः
प्रसूनराशिस्तव मूर्धनीति ।
पृष्टो विहस्याह विभुस्सहायान्
ज्ञानं भवद्भ्योऽपि कथं ममेति ॥६९॥

अवर्षीति ॥ अदृष्टपूर्वः पूर्वं अदृष्टः अयं प्रसूनराशिः पुष्पसमूहः केन जनेन तव मूर्द्धनि अवर्षि विकीर्ण इति पृष्टः । सहायैरित्यर्थात् । विभुः कृष्णः विहस्य हसित्वा सहायान् सह आगतान् गोपान् आह उक्तवान् । किमितिचेत् आह— मम भवद्भ्योऽपि ज्ञानं युष्मत्ज्ञानादप्यधिक ज्ञानं कथम् । भवेदिति शेषः । भवन्तः यत् जानन्ति तदेव अहमपि जानामि न तदतिरिक्तं किंचिदपि ज्ञातुं प्रभवामीति भावः । मयाऽपि पुष्पवर्षस्य कारणं न ज्ञातमिति उक्तं भवति ॥ ॥६९॥

विपह्यतां याति विवस्वदंशौ
विश्रान्तमुत्थाप्य गवां स पुञ्जम् ।
भूयस्तृणाश्यामळभूतलेषु
प्रारब्ध सञ्चारयितुं वनेषु ॥७०॥

विपह्यतामिति ॥ विवस्वतः सूर्यस्य अंशौ किरणे । जातावेकवचनम् । विपह्यतां सोढुं शक्यतां याति गच्छति सति सः कृष्णः विश्रान्तं गतश्रमं गवां पुञ्जं समूहं उत्थाप्य शयनात् उत्थितं कारयित्वा भूयः पुनः तृणैः आश्यामळं सर्वतः श्यामवर्णं भूतलं यत्र तादृशेषु वनेषु सञ्चारयितुं प्रारब्ध प्रक्रान्तवान् ॥ ॥ ७० ॥

ततः परिक्षीणसहस्रभानोः
अशाम्यदूष्मा दिवसस्य तीव्रः ।
यथा विनाशे धनसञ्चयस्य
महावलेपो धनिनो जनस्य ॥७१॥

तत इति ॥ ततः अनन्तरं परिक्षीणः प्रशान्तरश्मिः सहस्रभानुः यस्मिन् तस्य दिवसस्य तीव्रः क्रूरः ऊष्मा अशाम्यत् शान्तोऽभवत् । अत्र

लुठनं परिवर्तनं तत्कृत्वा नीडं कुलायं प्रविश्य बुभुक्षितानि क्षुधितानि अपत्यानि शिशून् चञ्चूपुटमर्चितेन तुण्डान्तस्समर्पितेन ग्रासेन भोज्यवस्तुना धिनोति प्रीणयति ॥ ॥ ७६ ॥

तदेहि शौरे तपनव्यपायात्
प्रागेव यामः पदमस्मदीयम् ।
इयं क्षितिः श्वभ्रतटेन पश्चात्
दुस्संचरा लुब्धकनिर्मितेन ॥७७॥

तदिति ॥ हे शौरे[२] इयं क्षितिः वनभूमिः लुब्धकैः किरातैः निर्मितेन विरचितेन श्वभ्रतटेन उत्खातकन्दरतया निम्नकृतस्थानेन । 'गर्तावटौ भुवि श्वभ्र' इत्यमरः । पश्चात् सूर्यास्तमयात् परं दुस्संचरा दुःखेन गन्तव्या स्यात् । तत् तस्मात् कारणात् एहि आगच्छ । तपनस्य सूर्यस्य व्यपायात् अस्तमयात् प्राक् पूर्वमेव अस्मदीयं पदं गोकुलं यामः गच्छामः ॥ ७७ ॥

श्रुत्वेति रामस्य गिरं मुरारिः
अस्त्वेवमित्यादरपूर्वमुक्त्वा ।
सह प्रतस्थे स च मित्रवर्गैः
प्रचण्डशृङ्गध्वनिपूरिताशैः ॥७८॥

श्रुत्वेति ॥ सः मुरारिः कृष्णः इति एवंप्रकारां रामस्य गिरं वाचं श्रुत्वा एवमस्तु तथाऽस्त्विति आदरपूर्वं उक्त्वा अभिधाय प्रचण्डेन उत्कटेन शृङ्गध्वनिना पूरिताशैः व्यापितदिङ्मण्डलैः मित्रवर्गैः सुहृद्गणैस्सह प्रतस्थे च प्रस्थितश्च ॥ ॥ ७८ ॥

सहप्रयाणाय कृतत्वराणां
ऊधोभराद्दूरविलम्बिनीनाम् ।

**स तत्र तत्र प्रतिपाल्य तस्थौ**
**प्रीतो गवामागमनं मुकुन्दः ॥७९॥**

सहेति ॥ स मुकुन्द सहप्रयाणाय समसेव गन्तु कृतत्वराणा वि हितसभ्रमाणामपि ऊधस आपीनस्य भरात् गौरवाद्धेतो दूर अत्यर्थ विळम्बिनीना मन्दीभूताना गवा आगमन आगति तत्र तत्र स्थाने प्रतिपाल्य प्रतीक्ष्य प्रीत सन्तुष्टस्सन् तासु दयालुत्व प्रीतिहेतु । तस्थौ स्थितवान् ॥

**समावृतो गोपजनेन नन्दः**
**गोपाङ्गनाभिश्च वृता यशोदा ।**
**अतिष्ठतामध्वनि लोचनाभ्यां**
**पुत्रागतिप्रेक्षणसस्पृहाभ्याम् ॥८०॥**

समावृत इति ॥ गोपजनेन समावृत परिवृत नन्द गोपाङ्गनाभि गोपीभि वृता यशोदा च पुत्रागतिप्रेक्षण पुत्रागमनविलोकन तत्र सस्पृहाभ्या सतृष्णाभ्या लोचनाभ्या उपलक्षितौ अध्वनि पुत्रागमनमार्गे अतिष्ठता स्थितवन्तौ ॥ ॥ ८० ॥

**चकार कर्णेषु तयोः प्रमोदं**
**दामोदरापूरितशृङ्गनादः ।**
**दिवि प्रसर्पन्नथ पांसुपूरः**
**नेत्रेषु पीयूषमिवाभ्यवर्षत् ॥८१॥**

चकारेति ॥ तयो यशोदानन्दयो दामोदरेण कृष्णेन आपूरितस्य आध्मातस्य शृङ्गस्य नाद शब्द कर्णेषु प्रमोद चकार । अथ अनन्तर पांसुपूर परागसमूह नेत्रेषु पीयूष अमृत अभ्यवर्षदिव । अमृतवर्षसम सुखं अकरोदित्यर्थ । दिवि गगने प्रसर्पन् व्याप्नुवन्निति उभयत्र विशेषणम् ॥

उपमामाह— धनिनः धनवतः जनस्य धनसञ्चयस्य द्रविणराशेः विनाशे क्षये सति महावलेपः महान् अहङ्कारः यथा शाम्यति नश्यति । 'विनाशो लब्धस्य व्यथयतितरां नत्वनुदय' इत्याहुः ॥ ॥ ७१ ॥

प्रभाकरे पाटलभासि दूरं
दिशं प्रतीचीमवगाहमाने ।
आलोक्य रामः परिणाममह्नो
दामोदरं सादरमित्युवाच ॥७२॥

प्रभाकर इति ॥ पाटलभासि अरुणतेजसि प्रभाकरे सूर्ये प्रतीचीं दिशं पश्चिमां आशां दूरं अत्यर्थं अवगाहमाने प्राप्नुवति सति रामः बलदेवः अह्नः परिणामं दिवसस्य अवसानं आलोक्य दामोदरं कृष्णं प्रति सादरं आदरेण सह इति वक्ष्यमाणप्रकारेण उवाच उक्तवान् ॥ ॥ ७२ ॥

आविर्भवन्मन्दमरुत्प्रचारा
शान्तातपा निर्वृतसर्वसत्वा ।
विरामवेळा दिवसस्य शौरे
प्रवर्तते पश्य मनोभिरामा ॥७३॥

आविर्भवदिति ॥ हे शौरे[2] आविर्भवन् उद्भवन् मन्दमरुतः मन्दानिलस्य प्रचारः संचारः यस्याम् । शान्तः शमं प्राप्तः आतपः यस्याम् । निर्वृतानि निर्वाणं सुखं प्राप्तानि सर्वसत्वानि निश्शेषजन्तवः यस्याम् । तादृशी मनोभिरामा दिवसस्य विरामवेळा परिणतिसमयः प्रवर्तते । पश्य अवलोकय ॥ ॥ ७३ ॥

शिरोभिरूढेन्धनशाकमूलाः
स्वयूथ्यमुच्चैस्स्वरमाह्वयन्तः ।

**वनेचरा वीक्ष्य विराममह्नः**
**समारभन्ते सहसैव गन्तुम् ॥७४॥**

शिरोभिरिति ॥ वनेचरा किराता अह्न विराम दिवसावसान वीक्ष्य अवगम्य शिरोभि ऊढानि धृतानि इन्धनानि काष्ठानि शाकमूलानि च शतकन्दादिभक्ष्याणि यै । स्वयूथेभ्य स्वयूथ्य जन उच्चैस्स्वर उच्चनाद यथा तथा आह्वयन्तस्सन्त सहसैव तरसैव गन्तु स्वस्वपक्कण प्राप्तु समारभन्ते प्रक्रमन्ते ॥ ॥ ७४ ॥

**शतं शतं व्योमनि बद्धमालाः**
**शात्कारवाचालविलोलपक्षाः ।**
**व्रजन्ति लक्षीकृतवासवृक्षाः**
**मनोजवाः पश्य पतत्रिणोऽमी ॥७५॥**

शतमिति ॥ अमी पतत्रिण पक्षिण व्योमनि आकाशे शतशत प्रायश शतसङ्ख्याल्प बद्धमाला ग्रथितपङ्क्तय शात्कारेण शब्दविशेषेण वाचाला मुखरा विलोला चञ्चला पक्षा गरुत येषा तथा सन्त लक्षीकृतवासवृक्षा विषयीकृतकुलायशाखिन मनोजवा मनस सदृशवेगा व्रजन्ति गच्छन्ति । पश्य अवलोकय । अमू निति शेष ॥ ॥ ७५ ॥

**भुवः परागे बहुशो लुठित्वा**
**प्रविश्य नीडं कलविङ्कयूथम् ।**
**धिनोत्यपत्यानि बुभुक्षितानि**
**ग्रासेन चञ्चूपुटसञ्चितेन ॥७६॥**

भुव इति ॥ कलविङ्काना चटकानाम् । 'चटक कलविङ्कस्स्या'दित्यमर । यूथ समूह भुव परागे महीरजसि बहुश अनेकवार लुठित्वा

लुठन परिवर्तन तत्कृत्वा नीड कुलाय प्रविश्य बुभुक्षितानि क्षुधितानि अपत्यानि शिशून् चचूपुटमचिनेन तुण्डान्तस्सपादितेन ग्रासेन भोज्यवस्तुना धिनोति प्रीणयति ॥ ॥ ७६ ॥

तदेहि शौरे तपनव्यपायात्
प्रागेव यामः पदमस्मदीयम् ।
इयं क्षितिः श्वभ्रतटेन पश्चात्
दुस्सञ्चरा लुब्धकनिर्मितेन॥७७॥

तदिति ॥ हे शौरे[2] इय क्षिति वनभूमि लुब्धकैः किरातै निर्मितेन निरचितेन श्वभ्रतटेन उत्खातकन्दरतया निम्नकृतस्थानेन । 'गर्तावटौ भुवि श्वभ्र'इत्यमरः । पश्चात् सूर्यास्तमयात् पर दुस्संचरा दुःखेन गन्तव्या स्यात् । तत् तस्मात् कारणात् एहि आगच्छ । तपनस्य सूर्यस्य व्यपायात् अस्तमयात् प्राक् पूर्वमेव असदीय पद गोकुल यामः गच्छामः ॥ ७७ ॥

श्रुत्वेति रामस्य गिरं मुरारिः
अस्त्वेवमित्यादरपूर्वमुक्त्वा ।
सह प्रतस्थे स च मित्रवर्गैः
प्रचण्डश‍ृङ्गध्वनिपूरिताशैः ॥७८॥

श्रुत्वेति ॥ स मुरारिः कृष्ण इति एवप्रकारा रामस्य गिरं वाच श्रुत्वा एवमस्तु तथाऽस्त्विति आदरपूर्व उक्त्वा अभिधाय प्रचण्डेन उत्कटेन श‍ृङ्गध्वनिना पूरिताशैः व्यापितादिङ्मण्डलैः मित्रवर्गैः सुहृद्गणैस्सह प्रतस्थे च प्रस्थितश्च ॥ ॥ ७८ ॥

सहप्रयाणाय कृतत्वराणां
ऊधोभराद्दूरविळम्बिनीनाम् ।

**स तत्तत्र प्रतिपाल्य तस्थौ**
**प्रीतो गवामागमनं मुकुन्दः ॥७९॥**

सहेति ॥ स मुकुन्द सहप्रयाणाय सममेव गन्तु कृतत्वराणा विहितसम्भ्रमाणामपि ऊधस आपीनस्य भरात् गौरवाद्धेतो दूर अत्यर्थ विलम्बिनीना मन्दीभूताना गवा आगमन आगतिं तत्र तत्र स्थाने प्रतिपाल्य प्रतीक्ष्य प्रीत सन्तुष्टस्सन् तासु दयालुत्व प्रीतिहेतु । तस्थौ स्थितवान् ॥

**समावृतो गोपजनेन नन्दः**
**गोपाङ्गनाभिश्च वृता यशोदा ।**
**अतिष्ठतामध्वनि लोचनाभ्यां**
**पुत्रागतिप्रेक्षणसस्पृहाभ्याम् ॥८०॥**

समावृत इति ॥ गोपजनेन समावृत परिवृत नन्द गोपाङ्गनाभि गोपीभि वृता यशोदा च पुत्रागतिप्रेक्षण पुत्रागमनविलोकन तत्र सस्पृहाभ्या सतृष्णाभ्या लोचनाभ्या उपलक्षितौ अध्वनि पुत्रागमनमार्गे अतिष्ठता स्थितवन्तौ ॥ ॥ ८० ॥

**चकार कर्णेषु तयोः प्रमोदं**
**दामोदरापूरितशृङ्गनादः ।**
**दिवि प्रसर्पन्नथ पांसुपूरः**
**नेत्रेषु पीयूषमिवाभ्यवर्षत् ॥८१॥**

चकारेति ॥ तयो यशोदानन्दयो दामोदरेण कृष्णेन आपूरितस्य आध्मातस्य शृङ्गस्य नाद शब्द कर्णेषु प्रमोद चकार । अथ अनन्तर पांसुपूर परागसमूह नेत्रेषु पीयूष अमृत अभ्यवर्षदिव । अमृतवर्षसम सुख अकरोदित्यर्थ । दिवि गगने प्रसर्पन् व्याप्नुवन्निति उभयत्र विशेषणम् ॥

तौ धूसराङ्गौ रजसा कुमारौ
गत्वा स नन्दः परिरभ्य गाढम् ।
आत्मानमानन्दसमुद्रमग्नं
नालं समुद्धर्तुमभून्मुहूर्तम् ॥८२॥

ताविति ॥ सः नन्दः रजसा गोधूळ्या धूसराङ्गौ शबळवर्णशरीरौ कुमारौ रामकृष्णौ गत्वा प्राप्य गाढं परिरभ्य आश्लिष्य आनन्द एव समुद्रे मग्नं अवगाढं आत्मानं आत्मशरीरं मुहूर्तं अल्पकालं समुद्धर्तुं वोढुं नालं अभूत् न पर्याप्तोऽभूत् ॥ ॥ ८२ ॥

उत्पत्य धावद्भिरुदस्तशस्त्रैः
क्ष्वेळारवक्षोभितदिग्विभागैः ।
आभीरवीरैस्स वृतः प्रपेदे
व्रजं समाकर्णिततूर्यघोषम् ॥८३॥

उत्पत्येति ॥ सः नन्दः उत्पत्य उत्पतनं कृत्वा धावद्भिः शीघ्रं गच्छद्भिः उदस्तशस्त्रैः उद्धृतायुधैः क्ष्वेळारवेण नादविशेषेण क्षोभितदिग्विभागैः चालितदिगन्तरैः आभीरवीरैः गोपवीरैः वृतः सहितः समाकर्णितः सम्यक् श्रुतः तूर्यघोषः दुन्दुभिध्वनिः यस्मात् तादृशं व्रजं घोषं प्रपेदे प्राप्तवान् ॥

चाटूक्तिभिः पार्श्वचरानशेषान्
विसृज्य गोपान् सहितस्स मित्रैः ।
विवेश कृष्णो भवनं दिनान्ते
समुज्ज्वलन्मङ्गळदीपिकाभिः ॥८४"

चाटूक्तिभिरिति ॥ स कृष्ण चाटूक्तिभि श्लाघापूर्वकवाग्भि अशेपान् पार्श्वचरान् भृत्यान् गोपान् विसृज्य गमयित्वा मित्रै वयस्यै सहित दिनान्ते साय मङ्गलदीपिकाभि समुज्ज्वलत् दीप्त भवन विवेश प्रविष्टवान् ॥ ॥ ८४ ॥

कामं दिवा कर्णपथं गतेन
नीताः प्रियं वेणुरवेण विष्णोः ।
प्रतिप्रियं चक्रुरमुष्य सायं
गावः पयोदोहननिस्वनेन ॥८५॥

कामभिति ॥ दिवा दिवसे काम अत्यर्थ कर्णपथ श्रोत्रमार्ग गतेन प्राप्तेन विष्णो वेणुरवेण वशनादेन प्रिय प्रीतिं नीता प्रापिता गाव साय सन्ध्याया पयोदोहनस्य क्षीरप्रपूरणस्य निस्वनेन शब्देन अमुष्य विष्णो प्रतिप्रिय प्रतिकाररूप प्रमोद चक्रु कृतवत्य ॥ ॥ ८५ ॥

अनुदिनमिति कुर्वन् पालनं गोकुलस्य
क्षणमिव दिवसानि क्रीडया यापयन् सः ।
अखिलमपि धरित्रीभारमभ्युद्धरिष्यन्
अरमत सह शौरिस्तत्र सङ्कर्पणेन ॥ ८६ ॥

इति सुकुमारकृतौ कृष्णविलासकाव्ये
चतुर्थस्सर्ग ॥

अनुदिनमिति ॥ इति एवप्रकार अनुदिन दिनेदिने गोकुलस्य गोसमूहस्य पालन त्राण कुर्वन् दिवसानि क्रीडया विहारेण क्षणमिव क्षण कालमिव यापयन् गमयन् धरित्र्या भूमे भार अखिल निश्शेषमपि अभ्युद्धरिष्यन् अभित उद्धर्तु क्षपयितु उपक्रममाणस्सन् स शौरि श्रीकृष्ण

तत्र व्रजे सङ्कर्षणेन बलभद्रेण सह अरमत क्रीडितवान् । जगतां भारापनोदेन परमानन्द जनयिष्यन् तत्र नन्दगृहे भगवान् अरविन्दनाभः सुखं अवसत् ॥ ॥ ८६ ॥

देवक्या घनसन्ततेरिव जवादाविर्भवन् गर्भतः
सन्तन्वन्नभिवर्द्धनञ्च जगतामंभोनिधीनामिव ।
आपीतद्युतिरङ्गनाजनदृशां चक्रैश्चकोरैरिव
श्रीमानिन्दुरिवेन्दिरासहचरो बालश्चिरं पातु वः ॥

इतिश्रीरामपाणिवादविरचिताया विलासिन्याख्याया
कृष्णविलासव्याख्याया चतुर्थस्सर्गस्समाप्तः ॥

